रामारिपूज्यपुत्राङ्घ्रिं प्रणमामि मुहुर्मुहुः

सा विद्या या विमुक्तये ।





लेखक-प्रकाशकः

राष्ट्रपति-पुरस्कृतः

**डॉ० जयत्श्याम ब्रह्मचारी**

व्याकरण, सा०, गो० वै० दर्शनाचार्यः

विद्यावारिधिः ( पी-एच० डी० )

प्रधानाचार्यः

**श्री शिवशर्मा संस्कृत महाविद्यालयः**

**दारागञ्ज, प्रयागः**

# समर्पणम्

यः स्वोदारभावनया श्रीशिवशर्म्मासंस्कृतमहाविद्यालस्य
समस्तोत्तरदायित्वं सन् १९७८ (वि० सं० २०३५) ई० तः
अद्यावधि सुष्ठुतया निर्वहति,
तस्मै संस्कृत-संस्कृत्योरुन्नायकप्रवराय, वंशपरम्पराया-
लब्धप्रतिष्ठनागरिकाय, समाजसुधारकाय,
साहित्यसेवारताय, धर्मप्रवणाय,
माननीय "श्रीहरिमोहन दास टण्डन" महाभागाय
सादरं सश्रद्धं च समर्प्यते इदं
निबन्धभास्करपुस्तकम् ।

जयतश्याम ब्रह्मचारी

[ श्री संवत् : २०५७ ]

# पुरोवाक्

श्रीकृष्णं करुणाकरं जनहितं राधापतिं सुन्दरं,
श्यामं कामजितं प्रसन्नवदनं वंशीधरं मोहनम्।
भाले चन्दनबिन्दुनासुललितं कर्णेलसत्कुण्डलं,
दिव्याङ्गं वरशोभितं नटवरं त्रैलोक्यनाथं भजे।।

चिरकालप्रतीक्षितं निबन्धभास्करो नाम पुस्तकं प्राकाश्यमानं तमालोक्य मोमुद्यते चेतः। पुस्तकस्यास्य संशोधन-विधाने विद्वत्प्रवराचा तारिणीश्झा महाभागेनाहं भृशमुपकृतोऽस्मि। एतदर्थं प्रश्रयावन तमस्तकोऽहं तस्य कार्तज्ञ्यमावहामि। किञ्चैतस्य प्रकाशनकार्ये स योगार्थं स्वान्तेवासिनं डॉ० लक्ष्मीनारायणमहापात्रमहं सस्नेहाशि सभाजयामि। तथा च प्रकृतविषये भूयो भूयः प्रोत्साहन-प्रदानाय पुराण तिहासाचार्यपदवी धारिणः पं० मुरलीधर पाण्डेय महाभागान् हृद संस्मरामि। अस्तु —

"आलस्यादप्रवृत्तिः स्यात् पुंसो यद् ग्रन्थविस्तरे"

इति प्राचीनोक्त्या नैसर्गिकालस्यहेतोः साधारणजनानां विस्तृ ग्रन्थाध्ययने प्रवृत्तिराहित्यं संभाव्य मयाऽस्मिन् पुस्तके सरलसुबो भाषया रोचकाकर्षकशैल्या विचारात्मकाः, वर्णनात्मकाः, आलोचन त्मकाः, भावात्मकाः, आख्यानात्मकाश्चच्छात्रोपयोगिविविधविषयमवलम्ब भारतीयसंस्कृति-संवलित-ज्ञानविज्ञानपूर्ण-निबन्धाः प्रबन्धाश्च सन्नि वेशिताः सन्ति। यानधीत्य विजिज्ञासवः कोमलमतयश्छात्राः छात्र्यश्च वश्यंलाभान्विताः स्युरित्याशास्ते।

वि० सं० २०५७ ई०

देववाणीसमर्चकः

डॉ० जगत्श्याम ब्रह्मचारी

# उपोद्घातः

वेदपुरुषस्य षडङ्गेषु प्रधानाङ्गं प्राणिशरीरे मुखमिव व्याकरणं स्मर्यते। तेन कस्यचिच्छब्दस्य व्युत्पत्तिसम्बन्धि सम्यग् ज्ञानं बोभवीति।

निःशेषेण तथा प्रकर्षेण बध्यन्ते शब्दा यत्रेति नि तथा प्र उपसर्ग पूर्वकात् बन्ध् धातोः घञ् प्रत्ययः अधिकरणे=निबन्धः प्रबन्धश्च, उभावपि पारिभाषिकशब्दौ प्रायस्तुल्यार्थौ। एवं सति कस्यापि प्रतिपाद्य-विषयस्य तत्स्वरूपोपेयमहत्त्वादेर्विवेचनपूर्वकं सुष्ठुसरल सुबोधशैल्यां भावाभिव्यक्तिस्तयोर्मुख्यं प्रयोजनं भवति।

परं केचन आहुः—कस्यचिदपि विषयस्य लघ्वाकारेण विवेचनं निबन्धः, विशदाकारेण विवेचनं प्रबन्ध इत्येतयोर्निर्धारितार्थो भवति। अपरे तयोर्विविधभेदान्कुर्वन्ति। तथा हि-वर्णनात्मक विचारात्मकालोचनात्मक आख्यानात्मकसाहित्यात्मक-भावात्मकश्चेति षाड्विध्य तयोरास्ते। एतेषु आलोचना सर्वेषामपि भवितुमर्हति। अत आलोचनात्मकस्य तदन्तर्गते समाहितत्वान्मुख्यतया पञ्चविधकथने न कापि हानिः।

(क) वर्णनात्मके निबन्धे च स्थावरजङ्गमनदीसमुद्रसूर्य्योदय-पशु पक्षिनगरप्रातः सन्ध्यामहोत्सव मेलापकतीर्थयात्रादीनां गुणदोषमहत्त्वादीनां रोचक शैल्यां वर्णनं भवति।

(ख) विचारात्मकयोस्तयोरार्थिक पारमार्थिक-(धार्मिक)-सामाजिक राजनीतिकाध्यात्मिकोपदेशात्मकपारिवारिकादिविषयेषु गुणदोषमहत्त्वा-दीनां रोचक शैल्यां वर्णनं क्रियते।

(ग) आलोचनात्मकयोस्तयोः कस्यचित्कवेर्लेखकस्य वा ग्रन्थस्य साहित्यस्य च शैल्यादेः समालोचनादृष्ट्या विवेचनं भवति। यस्मिन् तत्सम्बधिगुणदोषमहत्त्वादीनां च विश्लेषणंक्रियते।

(घ) आख्यानात्मकनिबन्ध प्रबन्धयोः कस्यचिदैतिहासिक महापुरुषस्य विदुषः समाजसेवकस्य राष्ट्रनायकस्य चरित—घटनादीनां च गुणदोष महत्त्वादीनाँ वर्णनं भवति।

(ङ) भावात्मक निबन्धे प्रबन्धे च कस्यचिद् दृश्यादृश्यप्रत्यक्षपरोक्ष भावानां हार्दिकभावुकतामयशैल्यां तत्सम्बन्धिगुणदोष-महत्त्वादीनां च विवेचनं भवति। एतादृङ्निबन्धप्रबन्धयोरुच्चकोटिकभावानां स्वच्छ-न्दताभिव्यक्ति वर्णनं विधीयते।

कतिपयविद्वद्भिः पूर्वोक्तपञ्चविधेषु मुख्यतया वर्णनात्मकविचारा-त्मकाख्यानात्मकश्चेति तिस्रोविधाः स्वीक्रियन्ते।

**रचनाविधिः—**

एतयोः सुष्ठुनिर्माणार्थं विशदभावानां विचारः, रमणीयशब्दचयनं मनोरमशैल्याद्यत्यावश्यकं विधेयम्। निबन्धप्रबन्धयोश्च सुविचार पूर्वकं विवेचनं तयोरात्मा, भाषा शैल्यादिकं तयोः शरीरं, प्रसादगुणो-

मप्युदारभावना तयोरलङ्कार उच्यते। यदिचेत्सुन्दर विचारोऽपि दोष-युक्तभाषायां शैल्यां च प्रकटीक्रियते तर्हि निबन्धप्रबन्धो सदोषत्वात् पाठक-पाठिकादि श्रोतृ गणान् आक्रष्टुं नार्हतः।

अतः सुबोधसरलमनोरमरोचकशैल्यामलङ्कारादिसमेतोदार भावना प्रसादमयीभाषा च निबन्धप्रबन्धरचनायां विशेषणापेक्ष्यन्ते।

निबन्धप्रबन्धलेखकानां कृतेऽधोलिखितवस्तूनामङ्कनमत्यावश्यकं वर्तते। येन विना तयोर्विशेषताया अभिवृद्धिर्नैव भविष्यति। लेखकस्य हृदयग्राहिणी शक्तिः क्रमबद्धतोपरि निर्भरायते। तां क्रमबद्धतां चतुर्षु भागेषु विभज्य निबन्धप्रबन्धयोः कलेवरसमृद्धिः कर्त्तव्या।

यथा हि—

क—आमुखम्। ख—उपपत्तिः।

ग—दृष्टान्तः। घ—उपसंहारः।

**आमुखम्**—निबन्धस्य प्रबन्धस्य च भूमिकाखण्डमामुखं कथ्यते। तदनयोरति दैर्घ्यं नानुमन्यते। रोचकं प्रभावोत्पादकं च स्यात्। आमुखान्तर्गतविषयस्य स्वरूपं लक्षणं च लेखकन स्वबिचारानुसारेण संक्षिप्य प्रस्तुतीकरणीयम्।

**उपपत्तिः**—अयं खण्डो निबन्धप्रबन्धयोश्च प्रमुखाङ्गं कथ्यते। अस्मिन्खण्डे विवेचनविषयस्य साधक-बाधकप्रमाणैस्तर्कबितर्कैश्च समालोच्यशैल्यामन्वयव्यतिरेकाभ्यां समर्थनं कर्त्तव्यम्। अस्मिन्खण्डे विषयप्रतिपादनस्य लाभो हानिर्वेत्यत्र प्रसिद्धविदुषां मतसामञ्जस्य प्रतिपादनं विधेयम्।

**दृष्टान्तः (उदाहरणम्)**—आमुखभागे निर्दिष्टोपपत्तिखण्डे समर्थितस्य विषयस्य कस्यचित्प्राचीनस्याथवार्वाचीनस्य पुरावृत्तस्योदाहरणेन परिपुष्ट करणं नाम दृष्टान्तः कथ्यते। यथा शास्त्राधीतानुभूतज्ञान-प्रकाशेन कस्यचित् गम्भीरपदार्थस्य ज्ञानं स्पष्टरूपेणानुभूयते, तथैव दृष्टान्तोदाहरणेन च विषयबोधोऽपि पाठकानां सरलतया (स्पष्टो भवति।

**उपसंहारः**—निबन्धप्रबन्धयोश्च चरमभाग उपसंहारः कथ्यते। अस्यिन्भागे पूर्वोल्लिखितविवेचन विषयस्य संक्षिप्ताकारेणसाररूपे प्रतिपादनं क्रियते। कुत्रकुत्रचित्स्थले पूर्वोपवर्णितविषयस्य विहङ्गमावलोकने निबन्धप्रबन्धयोश्च शीर्षकमप्यालोकनीयम्।

साहित्यं समाजस्य दर्पणो भवति। अनेन पूर्वोक्त विधिना निबन्धप्रबन्धयोरादर्शे लोककल्याणकारिविषयवस्तूनां परिदर्शनेनासन्मार्गात्सन्मार्गे पदाधानं सुशकमित्यत्र नास्ति संशीतिः।

**—आचार्य तारिणीश झा**

# निबन्धभास्कारोपरि सम्मतिः

प्रयागराजस्थ दारागञ्जस्थिते श्रीशिव शर्मा [संस्कृत महाकवि आलये प्रधानाचार्यपदमलंकुर्वाणैः पण्डित प्रकाण्डैः डॉ० जयत्श्याम ब्रह्मचारिभिर्विरचितं "निबन्ध भास्यकर" इति ग्रन्थमादितोऽन्तपर्यन्त महमपश्यम् । ग्रन्थेऽस्मिन् त्रयस्त्रिशत् निबन्धाः संग्रथिताः । तत्र संस्कृतस्य वैशिष्ट्यं, नैके उत्सवाः पर्वाणि च, परोपकारः, सदाचारादयः सामाजिका राष्ट्रिया-धार्मिका-दार्शनिकाश्च विषयाः विस्तरेण सरलभाषया बहुधा व्याख्याताः । ग्रन्थवलोकनेन निबन्ध कर्तुः प्रौढ पाण्डित्यं, प्रतिभा, परिश्रमश्च पदे पदे दरीदृश्यन्ते ।

यद्यपि एतेषु विषयेषु पूर्वमनेकैः विद्वद्भिः निबन्धाः लिखिताः संकलिताश्च परमत्र डॉ० ब्रह्मचारिवर्यैः तेषु तेषु विषयेषु ये शास्त्रीयाः पक्षाः निगूढाः ते विस्तरेण सप्रमाणं समुद्भासिताः इदमेवास्यग्रन्थस्य महद्वैशिष्ट्यमस्ति ।

ग्रन्थोऽयं संस्कृतच्छात्राणां विदुषाञ्च ज्ञानाय मोदाय च भविष्यति द्रढीयान् मे प्रत्ययः । अन्ते चाहं ग्रन्थकर्तुः डॉ० ब्रह्मचारिवर्यस्याभ्युदयाय नैरुज्याय तथा ग्रन्थस्यास्य प्रचाराय प्रसाराय च जगत्कल्याणकारकं श्रीचैतन्यमहाप्रभुं भगवतीं भागीरथीं च भूयोभूयः प्रार्थय इति ।

**डॉ० आद्या प्रसाद मिश्रः**

कार्तिक पूर्णिमा
११-११-२००० ई०

कुलपतिः
महर्षि महेशयोगी वैदिक विश्वविद्यालयः
नैदियर टाउन, जबलपुरम्
(म० प्र०)

# विषयानुक्रमणिका

# प्रथमकिरणः

# स्वतन्त्रभारते संस्कृतस्योपादेयता

प्राक्तनसंस्कृतभाषाविकासपल्लवितयुगाद्भिन्नोऽयं युगो मद्देशार्थं सर्वथा नवीनोऽस्ति। तात्कालिकभारतीयविविधस्थितयः (भौगोलिक-स्थितिः, बाह्याक्रमणात्मकराजनीतिकस्थितिः, ज्ञानात्मकस्थितिः, बिचार-परम्परास्थितिः) अद्यतनतत्तत्क्षेत्रीयस्थितिभ्यो भिन्ना आसन्, अतस्त-त्कालीनसंस्कृतभाषाया लाभस्य हानेर्वा तुलाकोटिमादायैतत्कालिकसंस्कृत-भाषाया लाभहान्योर्वार्ता व्यावहारिकदृष्ट्याऽसङ्गतैव प्रतीयते। यतः प्राचीनस्थित्या केवलमनुभवमुपलभ्यैतत्कालिकवायुमण्डलस्थितभारतवर्षे संस्कृतभाषायाः कीदृश्युपादेयता ग्राह्येति नवीनप्रणाल्या स्वतन्त्रविचारोऽ-स्माभिर्विधेयः।

स्वतन्त्रदेशाभिमुखं स्वकीयानेकविचारणीया विषयाः सम्भवन्ति, येषां विचारो महत्त्ववर्णनञ्च वैविध्यं जनयति। पराधीनराष्ट्रे शासना-नुकूलमेव सकलव्यवहारपरम्परा निर्णीयन्ते। तदा शासकः स्वार्थसाधनाय अधिकं महत्त्वं ददाति, इतरे विषया गौणरूपेण तिष्ठन्ति। अयम्भारत-देशः कतिपयशताब्दीपर्यन्तं पराधीनतापाश-निगडित आसीत्। येन केनापि प्रकारेणैतद्देशीयमहापुरुषबुद्धिवैभवेन पराधीनतापाशान्मुक्तोऽ-यमभवत्। नवागतस्वतन्त्रतया भारतस्य बहुमुखविकासः प्राथमिकोत्कर्षश्च प्रारम्भोऽभवत्। अद्य भारतराष्ट्रं परिवर्त्तनपथमनुसरति। प्राचीनपद्धति रप्यत्र विस्तृता दृश्यते। अद्य लोकानाम्पुरस्ते सकलविचारणीयविषयाः समुपस्थिताः, ये पराधीनताकाले प्रस्फुरितुमशक्ता आसन्। तेषु भाषा-विषयकैकः प्रश्नो विद्यते। अयन्तावानेवावश्यको यावान् भोजनाय लवणः। इदानीं चतुर्दिक्षु कुतः कथं वेति प्रश्ना जायन्ते। तेष्वेवैकोऽयमपि प्रश्नः यत् स्वतन्त्रभारते संस्कृतस्योपादेयता काऽस्ति। किम्प्रगतिशीलाऽऽधुनिकभारते संस्कृतभाषाविकासकार्य्यार्थं हेतुरस्ति न वा? किमियं भाषाऽद्यतन-वृत्तिभिरेवं राजनीतिभिः सह पदमेकीकृत्य गन्तुं शक्ताऽस्ति?

इत्यादि प्रश्ना अद्य यावद्वर्तमानविचारकाणां विचारपरम्परासु विद्यन्ते। एतद्विषये निम्नलिखितविचाराः प्रकटयितुं शक्यन्ते।

अस्ति संस्कृतभाषा सकलभाषाणाञ्जननी। एतद्देशे बह्व्यो भाषा व्यवह्रियन्ते, परन्तु संस्कृतभाषां विहाय नैतादृशी काप्येतद्देशीया भाषा

दृश्यते या व्यापकरूपेणाऽन्यभाषाभिः सह सम्मिलति। इयं संस्कृतभाषा देववाणीनाम्ना प्रसिद्धास्ति। व्यवह्रियमाणभाषाणामुद्गमस्थानं संस्कृतभाषैव स्वतन्त्रभारते, विशेषतो व्यवह्रियमाणचतुर्दशभाषाणां मध्ये हिन्दी-बङ्ग-गुजराती-मराठी-औत्कलीति पञ्चभाषाणां देवभाषया सह अत्यधिकः सम्बन्धोऽस्ति। आसु प्रयुज्यमाना बहवः शब्दाः सन्ति ये संस्कृतमूलधातुशब्दान् केन्द्रीकृत्य व्यवह्रियन्ते। उदाह्रियन्ते च—

आङुपसर्गपूर्वकगम्धातुप्रयोगः, आगमनार्थं प्रयुज्यते, 'यथा—आगच्छ इति। सर्वथा हिन्दीभाषायामपि 'आइये" बङ्गभाषायाम् "आसुन्" गुर्जर भाषायाम् "आवो" महाराष्ट्रभाषायां "या" तथा औत्कल्यां "आसन्तु" इति कथ्यन्ते। एवमेव संस्कृते 'याहीति" पदार्थः "जावो" तथैव बङ्गभाषायां "जान्" गुर्जर्यां "जावो" महाराष्ट्र्यां "ज्जा' तथा औत्कल्यां "जाआन्तु" इत्यपि सन्ति। एतादृशबहुशब्दप्रयोगेषु संस्कृतभाषायाः पुनरावृत्तिर्दृश्यते। अतएव संस्कृतभाषा इतरभाषाणाञ्जननीति कथनमनुपयुक्तं न प्रतीयते।

अतीतकालिकसाहित्योपरि दृष्टिपातेन देवभाषायाः प्रगतिरद्वितीयैव दृष्टिपथमायाति। अस्माकं सकलप्राचीनग्रन्था. संस्कृतभाषायामेव लिखिता दृश्यन्ते। सर्वप्राचीनग्रन्थः ऋग्वेदः, पश्चात् वेद एव चतुर्भागेषु विभक्तः ऋग्यजुःसामाथर्वनामभिः प्रसिद्धः। अनन्तरं चतुर्वेदा एवोपनिषद्रूपेण प्राप्यन्ते। पश्चाद्वाल्मीकिमुनिना मर्यादापुरुषोत्तमस्य भगवतो रामचन्द्रस्यापूर्वादर्शान् केन्द्रीकृत्याऽऽदिकाव्यं रामायणं विरचितम्। एतदध्ययनेन मानवानां केन सह कीदृशो व्यवहारो विधेय इति पूर्णज्ञानं जायते। एवमेव पौराणिकग्रन्थेभ्यः प्रारभ्य नीतिमनुस्मृत्यादिग्रन्थाः गीर्वाणवाण्यामेवोपनिबद्धाः सन्ति।

यथासमयं संस्कृतभाषा शनैः शनैः, एतावतीं प्रगतिमारूढाः यदियं न केवलं विदुषां राज्ञां ब्राह्मणानाञ्च व्यावहारिकी, अपि तु सर्वसाधारण लोकानां व्यवहारे समायाता। श्रूयते यत्तदानीं भारवाहकोऽपि शुद्धसंस्कृतं ब्रवीतिस्म। कश्चिद्राजा कञ्चिद् भारवाहकं पृष्टवान् किन्ते भारो बाधति? भारवाहको "बाधति" इत्यशुद्धं प्रयोगं श्रुत्वा न्यगदत्-'भारो न बाधते राजन् यथा बाधति बाधते" इति। अपरं च महाराजभोजस्य पुरः केनचित्तन्तुवायेन श्लोकोऽयमपाठि।

**काव्यं करोमि नहि चारुतरं करोमि,**
**यत्नात्करोमि यदि चारुतरं करोमि।**

भूपालमौलिमणिमण्डितपादपीठ !
हे साहसाङ्क! कवयामि वयामि यामि ।।

भोजप्रबन्धः

हे साहसाङ्क! कवयामि वयामि यामि ।। इति, इतिहास-पृष्ठ-भूम्यवलोकनेन ज्ञायते यत् संस्कृत भाषाकदाचित् (गुप्तकाले) लोकभाषा राजभाषा - रूपेण प्रचलिता आसीत्। गुप्तकालीनमुद्रास्वभिलेखेषु स्तूपेषु च संस्कृतभाषायामेव लिखितानि वाक्यानि मिलन्ति। उदाहरणार्थम्-काचमुद्रासुलिखितम् (काचगामवजित्य दिवं कर्म्मभिरुत्तमैर्जयति। तथा निष्कासर पृष्ठे (सर्वराजोच्छेत्ता इति। एवं घटोत्कचमुद्रासु, अभिलेखेषु स्तूपेषुच संस्कृतलेखनमेवोपलभ्यते। समुद्रगुप्तमुद्रासु (अश्वमेध पराक्रमः) इति लिखितमस्ति। कुमारगुप्तान्तः स्तम्भेषु (समुदितबल शोकान्पुष्पमित्रांश्च विलुप्तावंशलक्ष्मीः पितरि दिवमुपेते) इत्यादीनि लिखितानि सन्ति।

## आयुर्वेदज्योतिर्वेदयोर्दृष्ट्या

आयुर्वेदज्योतिर्वेदयोरपि क्षेत्रेऽनेकपुस्तकानि संस्कृतभाषामाध्यमेनैव लिखितानि। अथर्ववेदौपवेदोऽयमष्टाङ्ग आयुर्वेदः। चिकित्सामूलतत्त्वत्रयोपर्य्येव निर्भरम्। अयमार्थिकदृष्ट्या स्वल्पव्ययेनस्वल्पकालेन च पूर्णारोग्यप्रदः। लघुपथ्यग्रहणाऽपथ्यत्यागः शिक्षिताऽशिक्षितानां ग्रामीणनागरिकाणाञ्च सर्वेषाम्परिचितः सर्वेषु प्राप्तश्चास्ति। अस्यादि प्रवर्त्तको दिवदासो भगवतो धन्वन्तरेरवतारः। ब्रह्मेन्द्रभारद्वाजचरकसुश्रुतवाग्भट्टादिमहर्षिभिः प्रचारितः प्रसारितो भूत्वा जनगणरक्षाभारं वहति।

ब्रह्माथर्वसर्वस्वमायुर्वेदमुपादिशत्।
स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्।

चरकमतं तु—
"यस्य देशस्य यो जन्तुस्तस्य तस्यौषधं हितम्"।

वाग्भट्टेनोक्तम्—
नित्यं मिताहारविहारसेवी,
समीक्ष्यकारी विषयेष्वसक्तः।
दाता समः सत्यपरः क्षमावान्,
आर्तोपसेवी च भवत्यरोगः ।।

रासायनिकप्रक्रियास्वपि शतमुदाहरणान्यायुर्वेदशास्त्रीयाणि वर्त्तन्ते। रसायनशास्त्रस्य सर्वोच्चाचार्य्यो नागार्ज्जुन आसीत्। अनेन स्वर्ण-निर्म्माणविधिराविष्कृतः। अद्यापि कुत्रचिदनुभविनः प्राचीनायुर्वेदाचार्य्याः स्वर्ण-निर्म्माण-कलाभ्यः परिचिताः सन्ति। एकदा हस्तिनापुरे (दिल्ली नगर्य्यां विट्ठलदासमोदिनस्तथा चान्यवरिष्ठव्यक्तिनिरीक्षकतायामेकेन वैद्यराजेन सार्द्धसेटकद्वयपरिमितं पारदं स्वर्णरूपे परिवर्त्तितम्। वाराणसेयहिन्दूविश्वविद्यालयविशालप्राङ्गणे नवनिर्मितविश्वनाथालय-पूर्वभागोपरि कक्षतोरणद्वारस्तम्भोपरिखचितनागार्ज्जुनमूर्त्यधः; एतद् घटनाक्रमस्तिथिसहितमुल्लिखितोऽस्ति।

ऋषीणामतमेतत्—

ज्यौतिषं व्यवहारश्च प्रायश्चित्तं चिकित्सकम्।
विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम्॥

अपरे चाहुः—

उरगशतभिषार्द्रास्वातिमूलं त्रिपूर्वा,
भरणिरविजवारे भानुभौमे च युक्ता।
प्रथमदिनचतुर्थीद्वादशीषष्टिभूता,
विधिहरिहररक्षो रोगिणां मृत्युकालः॥
मूर्त्तौ चतुर्थे निशिनाथसंस्थिते,
माने च सूर्य्ये दशमे च भौमः।
मेषे च सिंहे धनुकर्कलग्ने,
रोगी हि यातो यममन्दिरेषु॥

वैज्ञानिकरीत्याऽऽयुर्वेदौषधय एतद्देशीयजलवायुखाद्यपदार्थमूलरसरसायनद्वारा निर्म्मिताः सन्ति। किन्तु भारतोऽयन्देशः समशीतोष्णः। षष्ठ्यंशांशभूतविदेशादागतौषधयः, एतद्देशमुपकर्त्तुं नहि शक्नुवन्ति। प्रमेहशीतलोन्मादहृद्रोगनारीवन्ध्यात्वमृतवत्सादिरोगान् पाश्चात्त्यौषधयो दूरीकर्तुमशक्ताः। परमायुर्वेदे विल्वपत्ररसमात्रेण शीतलारोगिणो यथा नीरुजा भवन्ति तथैव गुडूच्या प्रमेहपीडितः, सर्पच्छत्रया उन्मादिनः, अर्ज्जुनत्वग्भिर्हृद्रोगिणस्तिलगुडमोदकैर्वन्ध्यायुवतयो मृतवत्सारोगिण्यः पलाशाङ्कुरैर्नीरोगा भवन्ति। किं काऽपि पाश्चात्त्य

चिकित्सापद्धतिरेतत्समकक्षा भवितुमर्हति ।? केवलवातपित्तश्लेष्मनिदानज्ञानेनैव रोगिणां चिकित्सा भवति । सत्त्वरजस्तमोभिः प्राकृतिकोपचारः समुत्पद्यते । अतः आयुर्वेदीयचिकित्सापद्धतिरेव भारतीयानां कृते समुपकर्त्री इत्थं सुदीर्घातीतकालतः संस्कृतग्रन्थानां महती उपयोगिता संसिद्धा ।

अद्यतने हि वैज्ञानिके युगे यो हि देशो यावद्विज्ञानोन्मुखः सन्नग्रे चलति स तावदेवाऽधिकप्रगतिशीलो मन्यते । एतदुदाहरणान्यमेरिकारूस-ब्रिटेन आदि देशाः सन्ति । भवतु, वर्तमानभारते विज्ञानोपेक्षा कर्त्तुमशक्याः, परं विचारणीयोऽयं विषयो यदद्यतनविज्ञानप्रवृत्तिविकासे समुन्नयने च संस्कृतस्य कीदृशः सहयोगोऽपेक्षते ? कियत्पर्यन्तं संस्कृतभाषा मणिकाञ्चनयोगवत् योगदाने समर्था भवितुमर्हति ? एतदर्थमस्माभिरतीतसंस्कृत-साहित्य-परिशीलनमेव विधेयम् । प्राक् तु विचारणीयोऽयं प्रश्नो यत् संस्कृत-भाषयाऽपि किं वैज्ञानिकशास्त्रसृष्टिः कृता चिन्तिता च । वस्तुतो विज्ञान-क्षेत्रात् संस्कृतसाहित्यमसन्निहितं न विद्यते । संस्कृतज्ञानिनोऽनेकाश्चर्य्य-जनकवस्तून्याविष्कृत्य विज्ञानशिरः उच्चैः कृतवन्तः । एतद्देशीयगणिता-चार्य्यैरेव दशमलवपरिपाटी एवं शून्यान्याविष्कृतानि । अद्य सकलजगति भारतीयगणनापद्धतिमनुस्मृत्यैव गणितप्रक्रिया प्रचलति ।

ज्योतिर्विद्यायामपि संस्कृतस्य योगदानमधिकाधिकमुपलभ्यते । ग्रहाणामन्वेषणं तेषाकृतिरेवं तेषां प्रभावश्च भारतीय साहित्ये वर्णितोऽस्ति । आकर्षणशक्तिज्ञानं यूरोपदेशिनामेकादशशताब्द्यां जातम् । किन्तु भास्कराचार्य्येण स्वरचितसिद्धान्तशिरोमणौ पूर्वोक्तज्ञानं शतवर्षेभ्यः पूर्व-मेव वर्णितम् । एवमेव ग्रहाणांपृथिवीगतिज्ञानमपि इतः शतशवर्षेभ्यः पूर्व-मेवोद्घोषितम् । अधुनाऽणुशक्तिवार्ता चतुर्दिक्षु नूतनैव श्रूयतेऽन्यदेशीयैः । किन्त्वणुशक्तिपरिज्ञानं कणादिमुनेः पूर्वमेवाऽसीत् । अनेन वैशेषिकदर्शने, अणुशक्तिरुल्लिखिता, केवलमेतावदेव न, किन्तु कलानां दर्शनशास्त्राणाञ्च चूडान्तविकासो भारतीयसंस्कृतसाहित्ये उपलभ्यते । अत इदानीमपि नूतनमुपलब्धिमात्मसात् कृत्वा प्राचीननिष्ठां समीकृत्य च संस्कृत-साहित्यस्य सर्वोत्कृष्टोपादेयता विस्तार्य्याऽस्ति ।

## साहित्यिकदृष्ट्या

साहित्यपरम्पराणाम्प्रश्नः संस्कृतसाहित्यस्य सर्वोत्कृष्टतायै कल्पते । विस्तृतसंस्कृतसाहित्याभिमुखं सकलोपादानं निरस्ततेजोजायते । एत-त्साहित्ये कालिदासदण्डिभारविभवभूतिश्रीहर्षमाघप्रभृतयोऽनेके कवि-मूर्धन्याः काव्यकर्त्तारोऽभवन् येषां तुलनाऽन्यदेशीयकविभिर्भवितुं नार्हति ।

कालिदासनिर्मितशाकुन्तलानुवादमधिकृत्य "गेटेनामा"—पाश्चात्यकवि: नृत्यत् । तन्मुखात्सहसा नि:सृतोऽधस्तनपद्यबद्धोभाव;—

**वासन्तं कुसुमं फलञ्चयुगपद्ग्रीष्मस्य सर्वञ्च यत्**
**यच्चान्यन्मनसोरसायनमत: सन्तर्पणं मोहनम् ।**
**एकीभूतमभूतपूर्वमथवा स्वर्लोकभूलोकयो—**
**रैश्वर्यं यदि वाञ्छसि प्रियसखे ! शाकुन्तलं सेव्यताम् ।।**

नेदं केवलं, संस्कृतसाहित्यस्य सर्वजनीनताऽपि दर्शनीयाऽस्ति । यद संस्कृत-साहित्येऽनुशीलनीयगुरुतरगम्भीरग्रन्था विरचितास्तत्रैव बालान कृते नीतिशिक्षाप्रदा रोचका लघुग्रन्था अपि निर्मिता: । यथा— पञ्चतन्त्र हितोपदेशादय: । सम्भाव्यते यत् संसारे प्राय: काऽपि भाषैतादृशी न भवेत् य पञ्चतन्त्रानुवादो न लभ्यते । इदं संस्कृतभाषाया लोकप्रियताया उदा हरणम् । संस्कृतेन सर्वप्रकारकं साहित्यमर्पितम् । दार्शनिक धार्म्मिक पौराणिक-वैज्ञानिक-शिक्षाप्रदसाहित्यरचनायां सस्कृतसाहित्यविशालताय उदात्तदृष्टिपरिज्ञानं जायते । अनेकविद्वद्भिर्मुक्तकण्ठमिदं साहित प्रशंसितम् । डॉ० विलियम जोन्सेन स्वयुगप्रवर्तके भाषणे कथितं यत्—

"संस्कृतभाषाग्रीक् भाषात: प्रौढ़ा लैटिन भाषातोऽपि गरीयसी अ भाषाभ्योऽपि दृढ़तरा अस्ति ।"

अतएव संस्कृतसाहित्यमहिमा स्वयं सिद्ध: । अनुमीयते यदद्यावधि प्रकाशितसंस्कृतग्रन्थसंख्या पञ्चाशत् "५०,०००" सहस्रेभ्योऽप्यधिका यदाहि सहस्रहस्तलिखित ग्रन्था अद्यापि पुस्तकालयेषु संग्रहालयेषु अप्रकाशिता एव स्थापिता: सन्ति, न ज्ञायते कियन्तो ग्रन्था यवनशासक नामत्याचारखेटका जाता: । नालन्दाविश्वविद्यालये खिल्जीद्वाराऽर्पिता ग्निज्वालाऽद्यापि चक्षुषोरग्रे नृत्यतीव । केवलमियदेव न, किन्तु एतद्देशीय अपि संस्कृतग्रन्थान् प्रत्युपेक्षितभावबुद्धयो दोषभागिन: सन्ति ।

## राजनीतिकदृष्ट्या

राजनीतिकदृष्ट्याऽपि संस्कृतोपादेयताधिकैवास्ति । येन राज्ञ स्वशासनाधिकारो रक्षणीय: । स्वनियन्त्रणे कथं स्थापनीयश्च यथा स्वदेश सुखैश्वर्ययोरुत्थानं पुनर्जायतामिति । संस्कृतग्रन्थपठनादेव ज्ञातव्यम् ।

इदानीं यत्प्रतिपदं भारतशासनाधिकारिण एतत्क्षेत्रेस्खलितपद दृश्यन्ते । यदीयम्भाषा प्रोत्साहिता स्यात्तथा विदुषामभिमतंग्राह्यम्भवेत्तदा वनतिगर्ते पतन्नयंदेशोरक्षितो भवेत् । एतद्विषयेभर्तृहरिनीति-चाणक्य-नी

मनुस्मृति-शुक्रनीतिग्रन्था विशेषोपयोगिनोभवन्ति । याज्ञवल्क्येनोक्तं यत्—
"विद्वांसः सच्चरित्रा व्यक्तयोमन्त्रिपदे स्थाप्याः" ।

"मन्त्रिणः प्रकुर्वीत प्रज्ञान्मौलान् स्थिरान् शुचीन्निति ।" एते ग्रन्थाः संस्कृतभाषायामेवोपनिबद्धा दृश्यन्ते । कथनीयमेतद्यत् 'धर्म्मेण विना राजनीतिर्विधवाऽस्ति'' । पाण्डवैर्धर्म्मबलमनुस्मृत्यैव दुर्य्योधनादि-दुर्दान्तशतभ्रातरः पराजिताः "यतोधर्मस्ततो जयः इति महाभारतीय-व्यासवाणी देवदुन्दुभिस्वरेणाऽस्मान् प्रबोधयति । परं नाय धर्म्म-पदार्थो यदि कश्चिन्मामपकुर्य्यात्तथा मामकारणदुःखं प्रापयेत्तदापि तत्प्रतिक्रियां विना सहनंकुर्यात् । संस्कृतग्रन्थनीतिर्मां धर्म्मेण सह कर्त्तव्यपथोपरि बलप्रदानाय प्रेरयति । "आर्जवं हि कुटिलेषु न नीतिः", शठे शाठ्यं समाचरेत्, कण्टकेनैव कण्टकम् ।

**"यस्मिन्यथा वर्त्तते यो मनुष्यस्तस्मिंस्तथा वर्त्तितव्यं स धर्म्मः ।**
**मायाचारो मायया वर्त्तितव्यः साध्वाचारः साधुना प्रत्युपेयः ।।"**

अपिच—ज्वलितं न हिरण्यरेतसञ्चयमास्कन्दति भस्मनाञ्जनः इति भारविः । वर्तमानराजनीतिर्न चैककीलेन कीलिता । अस्यास्तावान् विस्तारो दृश्यते यावत्संसारस्य । अर्थादद्य सकलदेशा अन्ताराष्ट्रियरङ्ग-मञ्चमारुह्य स्वस्वदेशस्य प्रतिनिधित्वं कुर्वन्ति । एतदर्थं राष्ट्रियनीति सुस्थिरकरणायमहती शक्तिरपेक्ष्यते । एतत्सम्पर्के संस्कृतोपादेयता मूल्याङ्क-नञ्च भविष्यतः । प्रागस्माभिर्भारत राष्ट्रनीतिः पर्य्यालोचनीया । भारतीय-नीतिज्ञाः पञ्चशीलमुद्घोषितवन्त । एतत्प्रसारयितुं "बाडुङ्गनाम सम्मेलनं" विहितञ्च । अपरं सौहार्ददृष्ट्याऽनेकदेशीयैरेतत्स्वीकृतञ्च । किन्तु व्यावहारिकरूपेण नैतत्पालितम् । प्रथमं चीनशासनेनाऽविश्वास-मुत्पाद्य भारतीयसीमान्तर्वर्तिभूभागः स्वायत्तीकृतः । भारतीयशासनेन तु सम्राडशोकवदहिंसाव्रतं स्वीकृतम् । किन्तु तदादर्शमूलप्रवृत्तेस्तथैतिहासिक सत्यस्योपेक्षामकुर्वन् । तदाशोकनीतिः सफला यदा तदनुचन्द्रगुप्तपरि-वाहिन्या भेरीघोषोऽभूत् । आचार्यचाणक्यप्रतिभा कार्यरता आसीच्च । फलतः अद्य भारतीयैः स्वप्रतिष्ठाऽपेक्ष्यतेचेत्तर्हि, आचार्यकौटिल्यनीति-रेवाऽनुकरणीया । यतः—'अतप्तलौहो लौहेन न सन्धीयते'' इति कौटिल्यार्थ शास्त्रम् । अतो विश्वासघातिनं प्रति चाणक्यनीतिरेव ग्राह्या । तदैव राष्ट्ररक्षाप्रतिष्ठा सम्भवितुमर्हति । किन्त्वेतादृशीप्रेरणा संस्कृतोपेक्षया न प्राप्या ।

## सामाजिकदृष्ट्या

सामाजिकव्यवस्थारक्षणाय प्रत्येकदेशीयैर्यतितव्यम् । यतो हि समाजसङ्घटनं स्वराष्ट्राभ्युदयकारणम् । अत उभावन्यान्याश्रितौ । विचारणीयोऽयं विषयो यतः सामाजिकसङ्घटनपद्धतौ कीदृशं संस्कृतयोगदानमासीत् । वर्त्तमानकालिकप्रवृत्तिं प्रति तत्कीदृक् साहाय्यं सम्प्राप्तुमर्हति च । भारतीयप्रतिनिधियोग्यवेदग्रन्थेषु सामाजिकव्यवस्था निम्नोक्तप्रकारेण निर्दिष्टा ।

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत ।।**

(इति शुक्लयजुर्वेदः)

वर्णव्यवस्थेयं केवलं क्रमव्यवस्थाया वर्गीकरणमासीत् परं कालक्रमादियम्प्रथा रूढ़िमापन्ना । रामायणमहाभारतकालेऽस्यां परम्पराया-मधिककठोरता नोपगता, यतो हि—तदवसरे ईदृशं साक्ष्यमुपलभ्यते यत्र वर्णकर्मपरिवर्त्तनं भवतिस्म । परशुराम-द्रोणाचार्य्य-कृपाचार्य्य-प्रभृतयो मूलतो ब्राह्मणा आसन्, किन्तु क्षत्रियोचितकार्येषु लग्नाः । इत्थमेव विश्वामित्रेणाऽपि क्षत्रियकर्म नाङ्गीकृतम् । नैतावदेव, किन्तु ऋषभमहावीर-पार्श्वनाथगौतमजनकप्रभृतिमहर्षयोऽपि ब्रह्मज्ञाननिष्ठामेव परमश्रेयस्करी-ममन्यन्त । अतएव यौवनकालादेव विरक्ता अभवन् । एष नियमो गुप्तयुग-पर्यन्तं प्रचलितः । संस्कृतशास्त्रविधायका नैतद्विरोधमकुर्वन् । उदात्तविचार पद्धतिर्यदि कुतश्चित् ग्राह्या तर्हि संस्कृतविद्यात एव, अस्पृश्यतासङ्करादि दोषदूरीकरणार्थं संस्कृतभावनाङ्गभ्यः सहायतोपादेया । 'कृणुध्वं विश्व-मार्यम्' इतिवेदमंत्राः कन्न मोहयितुं शक्नोति । एवमेव ''वसुधैव कुटुम्बक-मिति'' महाभारतम् । शुनि चैव श्वपाके च पण्डिताः समदर्शिन इति श्रीगीता'' इत्यादि मन्त्रप्रेरणा वर्तमानभारते कुतो लभ्या यदि संस्कृतो-पेक्षा स्यात् । मानवानां स्वाभाविकी प्रवृत्तिर्यत् परिवर्तनार्थं पुरातनयोगो-न्मुखं पश्यति । वस्तुतः सत्यमेतत् प्राचीनेतिहासेषु, उत्थानपतनयोर्मूल-मन्वेष्टव्यम् ।

वैदेशिकशासनसमये एव देशोऽयं पतनोन्मुखो जातः । सामाजिक-व्यवस्थायामनावश्यकजटिलता आगता । मानवाः पशुभ्योऽपि निम्नश्रेण्यां-परिगणिताः । भारतीयमानवसमाज एतावत्संकीर्णभागे विभक्तो यत् एक एव भागः स्वकीयान्यभागात् घृणामवलम्बितवान् । फलतः इदानीमियँ भावना चरमसोपानमारूढ़ा परिवर्त्तनप्रवाहमगमत् । अधुना समन्वयसमता पुनः

सङ्घटनप्रवृत्तय उद्भवन्ति। अतः उदीयमानेऽस्मिन्प्रवृत्तिसमये संस्कृतोपादेयता स्वतः सिध्यति। आचार्यशङ्करीयनिम्नलिखितमन्त्रोद्घोषणाकरणीयैव।

**श्वपाको जल्पाको भवति मधुपाकोपमगिरा,**
**निरातङ्को रङ्को विहरति चिरं कोटिकनकैः।**
**तवापर्णे ! कर्णे विशति मनुवर्ण फलमिदम्,**
**जनः को जानीते जननि ! जपनीयं जपविधौ ॥६॥**

## राष्ट्रियैकतादृष्ट्या

राष्ट्रं तावत्कालं प्रतिभाशालि न भविष्यति यावत्कालं तदन्तःस्थितिः सुदृढा न भविष्यति। अद्य भारतीयान्तरिकविषया अति दुरूहाः। भाषाकारणात् प्रान्तविभाजनकरणमतीवभ्रमः। भाषानामन्येतद्देशीय निवासिनः परस्परं कलहायन्ते। भारतीयसंविधानेन तु चतुर्दशभाषाः सम्मानिताः। राष्ट्रभाषाविषये सकलप्रान्ता नैकमतयो दृश्यन्ते। फलतः परस्परमेवं राष्ट्रकलहविभीषिका समुपस्थिता। आंग्लभाषा तु राष्ट्रभाषा कदापि भवितुं नार्हति। यतो वैदेशिकीयम्। अस्यै राष्ट्रभाषा पदे स्थानदानं राष्ट्रियतायामुखे कलङ्कलेपनं स्यात्। अतएव ईदृशपरिस्थित्यां संस्कृतभाषैव राष्ट्रियभाषावशिष्टा यां सम्पूर्णदेशवासिनः सम्मोदयन्ति। यद्यपीदं सत्यं यत् संस्कृतज्ञानां संख्याऽस्मिन्देशेऽतीवन्यूना तथापीयं संख्या संस्कृते राष्ट्रभाषात्वेन स्वीकृते झटित्येव महतीं बृद्धिमाप्नुयात्। यदाऽऽङ्ग्लभाषा राष्ट्रभाषापदमारूढा तदालोके कियत् प्रतिशतमांलभाषाज्ञातॄणामासीत्? अतः संस्कृतोपादेयता एतद्विवादनिर्णयार्थं सर्वाधिकमूल्यवती।

संस्कृतभाषा सर्वत्र समाना। अस्यां रूपलेखनोच्चारणयोः, एवं व्याकरणेऽपि क्वचिदपि वैषम्यं न दृश्यते। अन्यभाषासु तु समानरूपता न दृष्टिपथमायाति। आङ्ग्ल-हिन्दी-बङ्गोत्कलीगुर्जरीतमिलीप्रभृतिभाषासु एकप्रान्तादितरप्रान्ते एवमेकजनपदादितरजनपदे एवोच्चारणादिवैषम्यं दृश्यते।

अतः राष्ट्रियैकतादृष्ट्या संस्कृतस्य महत्युपयोगिता दरीदृश्यते। अतएव भारतशासनं संस्कृतोन्नतये सततप्रयत्नशीलं भाति। १९५५ ईसवीये वर्षे संस्कृतप्रचाराय एकसङ्घो निर्मितः। कतिपयवर्षपूर्वं (२३।६।१९६२ ई०) भारतशासनेन केन्द्रीयसंस्कृतमण्डलं गठितम्। तस्य विद्वन्मूर्धन्या श्री एस्० एन्० एम० त्रिपाठी (वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतिः) डॉ०

उमेशमिश्रः (कामेश्वर सिंह दरभङ्गा विश्वविद्यालयोपकुलपतिः) तथा डॉ० वी० राघवन् (मद्रासविश्वविद्यालयीयसंस्कृतविभागाध्यक्षः) इत्यादिमहोदयाः सदस्या आसन्।

अपिच अस्या महत्त्वं न केवलं धार्म्मिकसामाजिकैतिहासिक दृष्ट्यैव, अपितु शैक्षिक-व्यावहारिक-दृष्टिकोणेनापि। कालक्रमेण तच्छिक्षापद्धतौ गतानुगतिकरूपेण कतिपये दोषा आपतिताः। तेषां निराकरणाय, आवश्यकपरिवर्त्तनेनाध्ययनाध्यापने सुष्टु विधातव्ये। तद्यथा—

(१) आधुनिकयुगानुकूलविशिष्टसंस्कृतज्ञानार्थं पठनपाठन प्रणाल्यां परिवर्त्तनम्। (२) प्राचीनग्रन्थानां छात्रोपयोगि सरलानुवाद करणम् (३) भारते सर्वत्र षष्ठकक्षाया आरभ्योच्चकक्षान्तं यावदनिवार्य संस्कृत-शिक्षणम्। (४) संस्कृत परीक्षोत्तीर्णछात्रेभ्यो जीविकाप्रदानम् (५) संस्कृतच्छात्रा अध्यापकाश्च परस्परं देववाण्यैवाभिभाषणम्। (६ संस्कृताध्यापकेभ्यः समुचित वेतनदानं तथा विश्रामवेतनञ्च। (७) यत्र तत्र देशे संस्कृतप्रचारार्थं सरलनूतनपद्धत्या गद्यपद्य-सम्बन्धि-पत्रिका प्रकाशनम्। (८) सकलसंस्कृतपरीक्षाया सर्व्वोच्चोत्तीर्णच्छात्राश्छात्रयश संस्थाभिः पुरस्करणीयाः। यद्युपर्युक्तविषयेषु यथासाध्यं विद्यालयेभ्यः स्वीकृतिप्रदानं स्यात्तर्हीयं संस्कृतभाषाऽचिरादेव स्वपूर्वगौरवं सम्प्रा सम्यक् प्रकाशिता भविष्यति, यतोऽस्या भारते श्रेष्ठस्थानमासीच्चाऽपि भविष्यत्येव।

विधिहरिहरयोगाद्भारतेऽस्मिन्स्वतन्त्रे,
विबुधवचनवीणा झङ्करोत्वल्पकाले।
सकलजनसमाजा हर्षिताः सन्तु लोके,
जयतु जयतु मातः शारदे सर्वकालम्॥

□

## (द्वितीयकिरणः)

# भारतीयसामाजिकजीवनस्योत्थानोपायाः

अद्यावधि भारतीयसमाज आधुनिकविकसितदशां नानुगतः। उन्नत्यर्थमुपाया मृग्यन्ते। किन्तु विकसितदशा अद्यतनभारतीयसामाजिकनेतृदृष्ट्याऽनेकधा परस्परं विरुद्धा प्रतीयते। ईदृक्दशायां यावन्मयैतन्ननिश्चीयते यद्विकसिता मे ऽभीष्टदशेयमेव, तावदुपायान्वेषणमनुचितम्प्रतिभाति । विशिष्टविकसिताभीष्टसामाजिकदशायां सर्वभिन्नमतं संगृह्योभयपक्षयोर्विवक्षेऽहम् । तयोरेक ईश्वरवादे प्रतिष्ठितः, अपरश्च केवलं भोगवादमारूढः, इति प्रतीयते। एतद्दृष्टिभेदमनारुह्य स्वदृष्ट्या या विकसितदशा आधुनिकसमाजोन्नत्यै उपयुक्ता प्रतिभाति मे तामुपवर्ण्य तत्स्वरूपनिर्णयचर्चां विधास्यामि।

मद्विचारदृष्ट्या मन्वादिऋषिप्रणीतसंस्कृतिः केवला ईदृश्युपायपद्धतिः, या भारतीयसमाजकृते सार्वकालिकी सार्वदेशिकीचप्रायः समानरूपाऽपि युज्यते। एतत्सिद्धान्तप्रतिपादनाऽवसरेऽनेकभिन्नपक्षाः उपस्थास्यंते। विस्तृतरूपेण यदुत्तरदानमत्रासम्भवम् । मन्मते श्रुतिस्मृतिप्रतिपादितसंस्कृतिनामकोपाय एव भारतीयसमाजं विकासोन्मुखं विधास्यति।

अस्ति मनुष्यः सामाजिकैकप्राणी। सभ्यतायास्तत्प्रातराभ्य यावत्सर्वप्रथमं समाजो मानवदृष्टिपथमायाति तदैवं प्रतिभाति यत् मनुष्यः आत्मानं समाजाङ्गरूपमपश्यत्। अस्ति सम्भवस्तदा समाजपरिधिः परिसीमितआसीत्। मानवानां दीर्घकालप्रसृतशैशवकालस्तं सामाजिकप्राण्यङ्गरूपे जीवनं यापयितुमबाधयत् । समाजोऽयमेवाऽग्रे गत्वा राज्यस्यैवं राष्ट्रस्य च रूपं दधाति। राष्ट्रहिताय स्वस्थसमाजोऽत्यावश्यकः। कदाचिदेवं दृश्यते यत् स्वस्थसमाजः प्रबलराष्ट्रन्यूनतां कदाचिदपि न प्राकाशयत्। भारते यद्यपि किञ्चिदितिहासक्षणं विहाय सबलमेवं सशक्तञ्च राष्ट्रं न निरमात्, परं चिरकालतो विकसिता, एवम्परिवर्द्धिता समाजस्वस्थपरम्परा सभ्यताया एवं संस्कृतेश्च रथमग्रे सारयितुं मार्गं व्यस्तारयत्। राजवंशास्तित्वं लोकानां मानसपटलादस्तं गतम्। परं समाज-मूल्यवन्मान्यता जागरूक प्रहरिवत् समाजमाघातादरक्षत्।

अद्यतनमधः पतितं भारतीय-समाजस्तरं विलोक्य प्राचीनयुगस्मरणमायाति। तद्युगमितिहासेऽतीवमहत्त्वपूर्णं सम्भवेत् यदाहि विभिन्नसमाजवर्गान्तः सङ्घर्षाणामपसारणाय भगवतेश्वरेण वर्णधर्म्मव्यवस्था निरमायि, उक्तञ्च गीतोपनिषदि, "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इति।

समाजीयसकलप्राणिनः स्वस्थानमारुह्य स्वस्वकर्त्तव्यानि पालयन्तु। सामाजिकवर्णसङ्घर्षस्तैरेव दूरो भविष्यति । तदनन्तरयुगे भावनेयं निम्नतामभजत् । अपरधर्म्माचार्यैर्वर्णधर्म्मोऽपररूप एवादृश्यत । या धर्म्म व्यवस्थोपवर्णिता तत्राऽधोगतानाङ्कृते किमपि स्थानं नासीत् । जन्मत एव ब्राह्मणक्षत्रियवैश्यशूद्राणाम्परिकल्पनां विधाय समाजोरूढिग्रस्तोऽभवत् । यावत् शताब्दीपर्य्यन्तं व्यस्थेयमेव प्रचलिताऽऽसीत् । अद्य परिस्थितयः परिवर्त्तितासुप्तं भारतं स्वं ज्ञातुं पुनः सचेष्टं दृश्यते, परमत्र विचारणी-योऽयंविषयः यत् भाविनी भारतीयसमाजरूपरेखा कीदृशी भविष्यति । आधुनिकसमाजो व्यक्तिवादितां गतोऽस्ति । अस्याभिः केवलं स्वहितो-पर्य्यैव ध्यानं दीयते । परं कश्चित्समाजस्तावत्कालं सुष्ठुसमाजतां न यातु-मर्हति, यावत् प्रत्येकसदस्यः परस्परमुपकर्तु मुद्युक्तो न भवेत् । यदेयं-वेदवाणी—"संगच्छध्वं संवदध्वं संवोमनांसि जानतामिति" सफला भविष्यति, तदा केवलं सिद्धान्ते एव न, किन्तु व्यवहारेऽपि सा इतिहासान्ते स्वर्णाक्षरैरङ्किता स्यात् । एतदर्थमावश्यकं यत् भाविभाग्यविधातृभारतीय-बालकानां मनःसु समाजकृते आत्मोत्सर्गभावो निहितो भवेत् ।

भारतीयसमाज आदिकालतो धर्म्मप्राण एव आसीत् । एतद्देशीय-धार्मिकादर्शमादाय पार्श्ववर्तीयाऽनेकदेशाः स्वसमाजं रचयामासुः । भारतादेव हि चीनजापानादिदेशेषु बौद्धधर्म्मस्य प्रचारप्रसारावभवताम् । इदञ्चीनयात्रिह्वेनसाङ्ग कलितऐतिहासिककथनेन प्रमाणितम् । धर्म्म-द्वारैव समाजोन्नतिस्तथा रक्षा भवितुमर्हति । उक्तञ्च मनुना—

"धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः ।"

आदौ को हि धर्म्म इति ज्ञानं परमावश्यकम् । "धृ" धारणे इति धातोः मन् प्रत्यये कृते धर्म्मशब्दः सिध्यति । ध्रियतेऽनेनेति धर्म्मः इति महा-भारते प्रतिपादितमस्ति अनिवार्य्यकर्त्तव्यधारणमेव धर्म्मशब्देन कथ्यते ।

धारणाद्धर्म्ममित्याहुर्धर्म्मो धारयते प्रजाः ।
यस्माद्धारणसंयुक्त स धर्म्म इति निश्चयः ।।
(महाभा० कर्ण० ६६/५८)

अपि च मनुस्मृतौ:---

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ।। (म० स्मृ० ६/६२)

यतः-एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यन्तु गच्छति ।। (धर्म्मशास्त्रम्)

"कौम्टे नाम: एक: पाश्चात्यदार्शनिकोऽपि धर्म्मशब्दं विवृण्वन् उक्तवान् यत् – येन स्थिरतापूर्णताभ्यां मानवसमाजे शान्तिः स्यात् स एव धर्म्मः कथ्यते।" इंगलैण्डदेशे विज्ञानसप्ताहे डॉ॰ प्ली मीमेनोक्तं यत् "विज्ञानधर्म्मौ परस्परमविरुद्धौ तयोरेकोऽपरं नोपेक्षते किन्त्वेकोऽन्यस्य सहायकः"। यथा हृदयं विना मनुष्यजीवनमसम्भवं तथैव धर्म्ममन्तरा सामाजिकजीवनमप्यसम्भवम्।

कलिङ्गविजयोन्मुखाऽशोकस्य चिरकालिकं शासनं किं तद्धर्म्मपरिणामो नाऽऽसीत्? लोकहृदयेऽविनाशिप्रभाव-कारणं किं तद्धर्म्मातिरिक्तापरशक्ति-प्रभाव आसीत्? सः विजयहेतुधर्म्मेणैव लोकहृदयेषु स्वासीमप्रभावं स्थापयितुमशक्यत्। तेन स्पष्टम्प्रतिभाति यत् साम्प्रतं देशयुवस्वनुशासनहीनता विद्यते, तत्र धर्म्मपृथक्करणमेव हेतुः उपर्य्युक्तगाम्भीर्य्यविचारेणाऽयं सारो निःसरति, यत् मनुष्यसमाजयोर्जीवनधारणमुन्नतिश्च धर्म्मोपर्य्येव पूर्णनिहिताऽस्ति।

भारतीयसंस्कृतेः सर्व्वोच्चविशेषता तत्परमोदारता सहिष्णुता च वर्त्तते। धार्मिक-सामाजिक-नैतिकव्यवहारेषु भारतीय-संस्कृतिरन्यदेशेभ्योऽधिकोदारा प्रतीयते भारतीयसंस्कृतिमूलं दृढधर्म्माधारमादायैव स्थितं भाति। मिश्रयूनानचीनदेशीयसंस्कृतयः भारतीयसंस्कृत्यैव प्रभाविताः। अत्रैतिहास एव प्रमाणम्। पूर्वंऋषिभिर्जीवनसुव्यवस्था शाश्वतशास्त्रप्रमाणानुसारेण विराट्पुरुषादुत्पन्नचतुर्वर्णेषु तथा चतुराश्रमेषु स्थापिता। यथा हि—

"विप्रक्षत्रियविट्शूद्रा मुखबाहूरुपादजाः।
वैराजात् पुरुषाज्जाता य आत्माचारलक्षणाः॥
गृहाश्रमो जघनतो ब्रह्मचर्य्यं हृदो मम।
वक्षःस्थलाद्वनेवासः संन्यासः शिरसि स्थितः॥

(श्रीद्भागवतम् ११/१७/१३-१४)

ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥

(इति यजुर्वेदः)

धार्म्मिकसुव्यवस्था कर्म्मफलानुसारदृष्टयाऽऽसीत्। इदानीमपि तत्समादरणीयम्। कर्म्मफलसिद्धान्तो भारतीयसामाजिकलोकजीवनेऽपूर्व सन्तोषं प्रापयति। अस्य सिद्धान्तस्य वैदेशिक-वैज्ञानिक-दृष्ट्या

किञ्चिदपि महत्त्वं मास्तु तत्सांस्कृतिकमहत्त्वं भारतीयजीवनोपरि यथेष्टमारूढम् । इतः पञ्चशताब्दीपूर्वं सुविख्यात "ग्रीकदार्शनिकः पाइथागोरसोऽपि" सम्भवतो भारतीयदार्शनिक-प्रभावित एव पुनर्जन्म-सिद्धान्तमङ्गीकृतवान् । अतः भारतीयसामाजिकजीवनोत्थानदृष्ट्या धार्म्मिक सुदृढ़तामानेतुं भारतीयसाधुवर्गाः प्रार्थ्यन्तेऽस्माभिः । ते आस्तिकभावनां जनजीवनान्तः स्थापयन्तु । भारतीयसंविधानस्य पञ्चविंशतिषड्विंशति क्रमनियमे स्पष्टमुल्लिखितम् यत् धर्म्मसम्बन्धिव्यवहारे राष्ट्रमिदं—कस्यचिदपि विमर्शे न किमपि नियन्त्रणं विधास्यति"

मानवानां सर्वाङ्गीणविकासार्थं शिक्षाऽऽवश्यकी । या मनुष्याणां बौद्धिकस्वस्थतां सामाजिकरागात्मकवृत्तीः विकासयतु । भारतीयप्राचीन शिक्षा वैदिकविधानेन वर्णाश्रममनुसृत्य गुरुकुल एवाऽदीयत । कालक्रमेण परिवर्तिताऽपि सा सामूहिकरूपेण गुप्तकाले एव नालन्दाविश्वविद्यालयपर्यन्तं, समुपस्थिता । यच्छिक्षाकेन्द्रस्य-प्राचार्य्यचाणक्यादिमनीषिणः प्रबन्धका आसन् । तदुपदेशगर्भ-वाक्येषु अवधानदानेन प्राचीनशिक्षाया महत्त्वं बोधगम्यम्भविष्यति । तथाऽऽधुनिकशिक्षाया अपि मूल्याङ्कनम्भविष्यति । यथा हि—

कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कस्याहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ।।
(चा० नी० ४/१८)

यदीच्छसि वशीकर्त्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गां चरन्तीं निवारय ।।
(तत्रैव १४/१४)

किन्त्वाऽऽधुनिकशिक्षा भूतपूर्वस्य मैकाले नामकलोकपालस्य (लार्ड) स्वप्नाऽऽधारेण निर्म्मिता, ब्रिटिश-शासन-कालीनशिक्षा केवलं लिपिकादि कार्यकर्तृन् समुत्पादितवती अथ च तदन्तः करणानि ईदृक्संकुचितानि आसन् यत् ते शिक्षां वैतनिक--साधनातिरिक्तं किञ्चिदपि फलं न बुबुधिरे। ईदृशी शिक्षा-प्रणाली व्यावहारिकदृष्ट्या जीवनकाठिन्यकारणं सम्पादयितुं तथा तत्सफलयितुमद्याऽसमर्था प्रतीयते । पुनः सा कथं समाजोत्थाने योगदानं करिष्यति ? यावत्कालं विश्वविद्यालयेषु आदर्शगर्भनैतिकशिक्षा-प्राधान्यं न भविष्यति तावद्विद्यार्थिगणानामुद्दण्डताण्डव शैथिल्यं न गमिष्यति । अतः समाजोत्थानसाधनेषु शिक्षा सर्वतोऽधिका विधेया।

यद्यच्च उच्चकक्षीयच्छात्रगणा नैतिकदृष्ट्यास्वकर्त्तव्यमारुह्य भविष्य जीवनोच्चवृत्यभिलाषे तत्पराश्चेत्तह्यर्धुना प्रत्येकविश्वविद्यालयेषु कलहाग्निबिभीषिका दृष्टिपथं न आयास्यति। एतन्निवारणायैकमात्रोपायो यदनधिकारचेष्टाया: समूलपरित्यागभावना। सामाजिकसकलव्यक्तीना-मुच्चशिक्षाशिक्षणमनावश्यकम्। "एकश्चन्द्रस्तमोहन्ति न च तारा-गणैरपि" इति न्यायेन केवलोदात्तचरित्रा एवोन्नतशिक्षाधिकारार्हा-स्तएवोच्चासने आसितुं वाञ्छनीयाश्च। भविष्यत्काले तद्द्वारैव समाज-उज्ज्वलिष्यति। विश्वविद्यालयेषु एतादृक् प्रतिबन्धोऽपेक्ष्यते यत्तत्राऽल्प-योग्यताप्राप्तोद्दण्डादान्तान्तेवासिनां प्रवेशाधिकारो न भवेत्। अनेन सह अवशिष्टमाध्यमिकच्छात्राणां जीवन-निर्वाहार्थं विविध-कार्यक्षेत्राणि स्थाप्यानि।

विश्वविद्यालयीयशिक्षाप्रणाल्यां दोषमार्जनार्थं भारत-शासका: डा० श्री राधाकृष्णनमहोदयाध्यक्षतायां यमायोगं स्थापितवन्तस्तदनुसृत्य, अद्यावधिकार्य्याणि पूर्णरूपेणाऽविकसितान्येव दृश्यंते। ३-२-१९६० तमे ईसवीये वर्षे दिल्लीनगरे शिक्षाविदां तथा शिक्षाधिकारिणां सम्मेलनेनाऽपि निश्चितं यत् विश्वविद्यालयेषु माध्यमिकविद्यालयेषु च नैतिकशिक्षाऽध्ययनमनिवार्य्यं विधेयम्। अद्यावधि स निर्णयोऽपूर्ण एवाऽस्ति। ७--१०--१९६३ तमे ईसवीये वर्षे पञ्चाशविज्ञानाधिवेशनसमये विज्ञानानुसन्धानगोष्ठ्यामध्यक्षपदेन भाषमाण: पद्मभूषण: डॉ० वी० एन० प्रसाद: अवोचत् यत् "विश्वविद्यालयेषु परीक्षाप्रणाली सैव प्राचीना प्रसरति। आगतोऽयं समयो यत् इमां परिवर्त्य परीक्षाणां काचिच्छोभना तर्कसिद्धा सम्मानपूर्णा च प्रणाली प्रचाल्या। अत:, भारतीयसामाजिकजीवनम् उज्ज्वलयितुं शिक्षाप्रणाल्यां पूर्णत: परिवर्त्तनमभीष्टम्।

भारतीयसमाजेऽद्य नारीणां तत्स्थानं कुत्राऽपि नाऽवलोक्यते यत् कदाचित् ताभिर्लब्धम्। सा मनुवाणी "यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवता:" इति अद्य कतिपयजनमुखे एव श्रूयते। यदि समाजस्याग्रे वर्द्धन-मपेक्ष्यते तर्हि अत्राप्यवधानं देयम्। माता, भगिनी, पत्नी, तथा कन्या, अनेकरूपेण ता मनुष्याभिमुखमायान्ति। मानवजीवनविकासार्थं स्त्रीणां नाल्पयोगदानमासीत्। रामजीवने सीतया, युधिष्ठिरकाले द्रौपद्या, नल-जीवने दमयन्त्या सत्यव्रतो जीवने सावित्र्या एवं वर्त्तमानसमये गान्धी-जीवने कस्तूरवया यादृक् प्रभावो न्यस्त: एतेन कश्चिद्भारतीयोऽनभिज्ञो-नाऽस्ति। अस्माभि: स्त्रीणां कृते समुचितस्थानमवश्यं देयम्। समाजे

स्त्रीणां तदेव स्थानं यत्पुरुषाणाम्। मानवजीवनरथस्य स्त्रीपुरुषरूपे द्वे चक्रे, एतयोः परस्परमन्योन्याश्रयः सम्बन्धः। तथाहि—

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्"

तथैव प्रायः सत्यसामाजिकजीवनदशायां स्त्रियं विना जीवनयात्रा दुर्वहा। अतः, अनयोर्मध्ये विभागकरणमसाधु। बालिकाशिक्षणविषये पूर्णमवधानं देयम्। यतः साम्प्रतिकबालिका एव मातरो भविष्यन्ति। समुचितशिक्षामन्तरा ताः स्वकर्त्तव्ये प्रवर्तयितुमशक्याः। नगरातिरिक्त ग्रामीण-बालिकानामनिवार्य्यशिक्षायाः कोऽपि प्रबन्धोऽद्यावध्यपूर्ण एव। वैदिकयुगीनललनासु पुरुषसदृश एव शिक्षाप्रबन्ध आसीत्। ताः पुरुषैः सह ऋचो व्यरचयन्। गार्गी,-मैत्रेयी,-मदालसादि-विदुष्यः स्त्रीजातिशिरः गौरवान्वितमकुर्वन्। एवमागामिनि काले भारतीयसामाजिकजीवनयापन-विधायक-स्नातिकाभ्यः पाश्चात्य-प्रभावेण दूषितभौतिकतावादिशून्य विचारधाराभिः प्रभावितकेवलभोगवादिप्रवृत्तिमृगतृष्णामपसार्य व्यवहारिकजीवनानुकूलोच्चशिक्षाप्रदानं समुचितम्। तथाहि—

भूगोलार्थशास्त्रसाहित्येतिहासनागरिकशास्त्रगृहविज्ञानस्वास्थ्य-विज्ञानशिशुपालनसङ्गीतचित्रकलादयस्तदङ्गीभूता एव। यथा ताः स्वभाविजीवनार्थमेवं सन्ततिहितार्थञ्च, उपयुज्य दैशिकयोग्यसेनानीं निर्म्मातुं शक्ष्यन्ति। इति निर्विवादोऽस्ति यत् नार्य्यः पुरुषवत् शिक्षकप्राड्विवाकन्यायाधीशचिकित्सक (डाक्टर) वायुयनचालिका अपि भवितुं शक्नुवन्ति। एतज्ज्वलन्न्युदाहरणानि, अहल्याबाई, लक्ष्मीबाई इत्यादि वीराङ्गणा अभूवन्। एकदा महिलाविद्यापीठदीक्षान्तसमारोहसमये भूत-पूर्वराष्ट्रपतिः डॉ० राजेन्द्रप्रसादो महादेवीबर्म्मणं प्रशंसन्नुक्तवान् यत् "भवती बालिकानां करेषु लेखन्या सह शतघ्नीमपि ग्राहितवती।"

भारतीयसामाजिकजीवनाय पाश्चात्याऽऽदर्शानुकरणं विषमताया मूलस्रोतोऽस्ति। प्रायः दृश्यते यत् विभिन्नजातीनामथवा विभिन्नसंस्कृतीनाम् परस्परसम्मेलने एकाऽपराम्प्रति स्वप्रभावेणाऽऽक्रामति। ततः, विचारविनिमयादर्शसभ्यतादिसकलक्षेत्राणां विचित्र परिवर्तनं स्वभाव-सिद्धम्। फलतः भारतीयानेकनागरिकाः वैदेशिकसंस्कृतिच्छत्रच्छायायां पालिता भूत्वा तदनुकर्त्तुं गौरवान्विति बुबुधुः। तन्मोहमोहिता युक्तायुक्त-विचारे प्रथभ्रष्टतया प्रतिकूलतामनुकूलतां कर्तुं न शेकुः। पाश्चात्य देशीयाः शीतप्रधानदेशोत्पन्नतया "कोट पेन्ट टाईः" इत्यादि उष्णवा-सोभिः स्वाकृतेरधिकाधिकाऽऽच्छादने शारीरिककौशलमेव पोषयन्ति; किन्तुग्रीष्मप्रधानदेशवासिनो भारतीया ईदृक्वेशविभूषिता अगणित-

धनस्यापव्ययं विधायानन्दमनुभवन्ति । न जानन्ति यत् भारतीयानां कृते धौतवस्त्रादि, अल्पमूल्यकवस्त्राणि शिथिलपरिधानानि च विशेषहितकराणि, तथा तत्र निजं पृथक् व्यक्तित्वं प्रतीयते ।

आधुनिकयुगो विज्ञानयुगः कथ्यते । सर्वदिक्षु विज्ञानचमत्कारो दृष्टिगोचरीभवति मोटरयानम्, हर्म्म्यम्, ध्वनियन्त्रम्, वाष्पयानम्, चलचित्रम्, वायुयानं तथा बृहच्चिकित्सालयः बृहद्बृहद्यन्त्र-मित्याद्यखण्डज्ञान राशिषु भवत्स्वपि वयं चञ्चला अशान्ताश्च वर्तामहे । यदास्माभिः पूर्वजजीवनं पठ्यते तदाऽतीवाश्चर्यं भवति यत् यावत्यः सुविधाः अद्यास्माभिर्लभ्यन्ते तच्छतांशमपि तेषां दुर्ल्लभमासीत् । तथापि ते स्वजीवने सन्तुष्टा एव आसन् । सन्तोषः परमं सुखमिति मन्त्रं हृदि निधाय स्वपौरुषनिर्भरा आसन् । परं तदात्मबलेनाद्य वयं शून्याः स्म । विज्ञानयुगीयपाश्चात्त्यादर्शपालितावयं तत्तरङ्गे प्रवहामः । तद्विचार्य्यतां पाश्चात्त्यादर्शमारुह्य भारतीयसमाजः कथं स्वजीवनं सुखयितुं शक्नोति ।

इतिहासेन ज्ञायते यत् "मार्कनी" ध्वनियन्त्रस्य, आई० एल० वेड दूरदृष्टियन्त्रस्य, तथा एडिशन् चलचित्रस्यचाविष्कर्तारः १८८० तमेईसवीये वर्षे यदा चलचित्रमाविष्कृतवन्तस्तदा तदुत्तरसमये दादासाहब फल्केन भारते सर्वप्राक्तत् प्रावेशयत् । आदौ केवलं मौनयुक्तचलचित्रमदर्शयत्, परन्तु ततः क्रमशः एतावद्वृद्धिं गतम्, यदद्य सामाजिकमनोविकृतिकारकमशोमनीयभावनापरिपूर्णमशोभनीयचित्रं दर्श्यते । एतत्कुप्रभावः सामाजिकजीवनेऽधिकमारोहति । अतोऽश्लीलचित्राणि तथाऽश्लीलगीतानि च पूर्णरूपेण प्रतिबन्धनीयानि । चित्रनिर्म्मातारः स्वचित्र विज्ञापनहेतोः एतादृशचित्राणि (पोस्टर) विरचयन्ति, यानि निम्नप्रकारप्रवृत्तीः उत्तेजयितुं सहायकानि भवन्ति । वस्तुत एतद्दुष्प्रभावः विश्वविद्यालयेषूच्चमाध्यमिकविद्यालयेषु च पठतां विद्यार्थिनां कोमलहृदयोपरि आरोहति । ईदृक्दशायां भारतीयसामाजिकजीवनोत्थानदृष्ट्याऽधिकाधिकरूपेण शिक्षात्मकचलचित्रप्रदर्शनस्य, तथाऽश्लीलसङ्गीतस्य च प्रतिबन्धः सामाजिकजीवनपरिष्कारे एकं महत्त्वपूर्णपदम्भविष्यति । अन्यथा कथानकाऽऽख्यायिकादिसाहाय्येनाऽऽबालवृद्धवनितासु पापापराधाऽश्लीलप्रेमादिप्रतिबिम्बः दिनानुदिनं समाजं पातयिष्यति ।

यौतुकं भारतीयसमाजेऽतीवकलङ्कोऽस्ति । सुरसामुखमिव वृद्धिं गच्छतो यौतुकस्य कारणात् भारतीयकृषकाः स्वपुत्रीणां विवाहमुचितसमये स्वसमानपरिवारे कर्तुं न शकनुवन्ति । अत एवैतद्दीर्घकालिकाऽविवाहो जीवनमसदाचारम्प्रति प्रेरयति । अस्मिन्विषये ऋषिभिरुक्तम्—

**यथोरेव समं वित्तं यथोरेव समं कुलम् ।**
**तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ।।**

अतः, भारतीयादर्शसमाजाय विवाह-मूल्य- प्रथा त्याज्या । अने सहैव, अयमपि विचारणीयः प्रश्नः—किं बाल्यविधवाविवाहप्रचा उचितः प्रतिभाति ? एतद्धर्मशास्त्रिणांमहर्षीणां मताद्विरुद्धः प्रतीयते तथाऽपि देशकालपात्राण्यनुसृत्य सामाजिकोन्नतिदृष्ट्या स्वीकरणमधर्म्म न । प्राक्काले समाजीयपुरुषस्त्रीणां हृत्सु जितेन्द्रियत्वभावना पूर्णतय निवसतिस्म । पुरा ताः वैधव्यमवाप्ता अपि पातिव्रतपरायणाः सुचारुरूपे कालमत्यवाहयन् किन्त्विदानीं कलिकलङ्कितयुगे भारतीयनरनार्य्यः पूर्व वत्स्थातुमशक्ताः बहुविधमानसिकदौर्वल्येनानधिकारचेष्टां कुर्वन्त्यो दृश्यन्ते अतोः महर्षिप्रणीतशास्त्रीय-नियमोल्लङ्घनदोषमवलोक्य व्यावहारिकपापेभ्य जीवन-रक्षणाय उपर्य्युक्तनियमाऽनुसरणं भारतीयसमाजोन्नत्युपायः ।

एतत्प्रथातिरिक्तमपि त्रयोदशाहादिवहुजनभोजनादिसदृश सामाजिककुरीतयः सन्ति याः समाजं ह्रासोन्मुखं रचयन्ति । भारतीय किञ्चनजनाः स्वकीयावश्यककार्य्याणि पृथक् संस्थाप्य एतत्सामाजि बन्धनपूर्णेन कार्येण बाध्यन्ते परिणामतस्तैः अन्यतः ऋणग्रहणं कर्त्तव भवति । महाजनाः स्वकुसीदलाभार्थं तान् बध्नन्ति । कृषकजनानामन्नान्यल मूल्येन क्रीणन्ति । अतस्ते ऋणैः सदाऽऽक्रान्ता एव भवन्ति । नेदमेव अपि तेषामिदं ऋणग्रहणं वंशपारम्परिकरूपेण चलति । एतद्विचारं हृदये निवेश "जिसविक" नामकाऽर्थशास्त्रिणालेखि यत् "कृषकाः ऋणे जन्म गृह्णनि तत्रैव तिष्ठन्ति पुनः तत्रैव म्रियन्ते च" । किमीदृशी दशा तान् विकासा वञ्चयिष्यति ? किन्तदधः पतनं न भविष्यति ? यावत्कालम् उपर्युत सामाजिककुरीतयः समाजान्न बहिष्कृता भविष्यन्ति तावत्स्वतन्त्रतानन्त मपि जना दास-यन्त्रणाक्रान्तत्वादुन्नतिं कर्त्तुमशक्याः ।

भारतीय सामाजिकोत्थानस्य मूर्त्तिमती विरोधिनी नैरन्तर्य्यवर्द्धमा जनसंख्याऽस्ति । बाल्येऽहं भूगोलाध्ययनसमये भारतीयजनगणनां चत्वा शत्कोटिपरिमितामलिखम्, परन्त्वद्य, द्विगुणप्रायासंजाता जनसंख्या । मन षिजनानुमानेन उपर्युक्तजनसंख्या भारते एकवर्गमीलकृषियोग्यभू त्रयस्त्रिंशदुत्तरपञ्चशतव्यक्तयः (५३३) सन्ति । तथा सामूहिकसमष्टिरूपे एक वर्गमील भूमौ पञ्चपञ्चाशदुत्तर द्विशतव्यक्तयः [१](२५५) सन्ति । वि द्विचार दृष्ट्या पूर्णोन्नत विकसितदेशे यावत् प्रतिवर्गमीलं पञ्चाशदुत्तरशत

(२५०) भाव्यम् । यदि परीक्षेत तर्ह्यस्मिन् न काप्यत्युक्तिः भारतं परिगणित जनसंख्याया अत्यधिकभाराक्रान्तमस्ति । यदि समाजं प्रगतिपथाग्रेसरं कर्तुमीहा तर्हि, सन्ततिनिग्रहोऽवश्यंकर्तव्यः। भारतीय समाजे एतादृशीभावना तदा प्रादुर्भविष्पति यदाऽऽधुनिकनरनारीणां पारस्परिकशाश्वतशारीरिक दौर्बल्याऽन्तर्द्वन्द्विकता निष्प्रयोजना न बोद्धव्या । भावनेयं धर्म्मयुक्ताऽनिवार्य नैतिकशिक्षणोपरिनिहिता ।

सामाजिकजीवनोत्थानार्थं भाषामाहात्म्यमपि न्यूनं नास्ति । यदा सामाजिकसकलव्यक्तयः, एकभाषोपासिका न भविष्यशन्ति तदा परस्पर मैक्यमप्यशक्यम् । अद्य भारतीयसंविधाने चतुर्द्धश भाषाः स्वीकृताः वर्तन्ते यां भाषां बहुसंख्यका जनाः जानन्ति सैव राष्ट्रभाषा भवति । प्राचीनेतिहास । पौर्वापर्य्यविचारेण, इदमेव ज्ञायते यद् भारतीयपुरातनराष्ट्रभाषा, संस्कृत मेवाऽऽसीत् । एतत्प्रमाणितमपियत् गुप्तकालीनमुद्रासु एवमभिलेखेष्वपि संस्कृतभाषैव प्रयुक्ता । संस्कृतभाषयैव पुरातनभारतीयसमाजो वेदपुराणादि माध्यमेन सुप्रथितिम्प्राप । संगच्छध्वं संवदध्वमित्यादिकथनाऽभिप्रायोऽयं यत् सम्पूर्णभारते हिन्दी भाषा, अथवा संस्कृतभाषैव राष्ट्रभाषा भवितुं शक्या । परं खेदवार्तेयम्, अद्य हिन्दीभाषा राष्ट्रभाषा पदमारूढ़ाऽपि न व्यवह्रियते । आङ्ग्लभाषाऽपि सहभाषारूपेण माननीया भविश्यति । यत इयं विदेशेष्वपि विस्तृता । एतत्परित्यागे ,वैदेशिकव्यावहारिकआदानप्रदानयोः क्षतिर्भविष्यति । अतः शीघ्रातिशीघ्रं भाषाविषये ध्यानं देयम् । सामाजिकोन्नत्यर्थं साहित्यानुसरणमप्यवधेयम् । प्रत्येकयुग साहित्यविचारद्वारा निजयुगसामाजिकजीवनं केनापि रूपेणं प्रभावितं भवति, यतोहि साहित्य-समाजयोरविच्छिन्नसम्बन्धो वरीवर्ति, अधुना साहित्यमधिकाधिकव्यक्तिगतं दृश्यते । व्यक्तिगतभावनाः प्राधान्येन प्रकटयन् साहित्यकारः समाजमवहेलयति सामाजिकजीवनोन्नतिहेतवे "रामादिवत् प्रवर्तितव्यं,न रावणादिवत् । इत्यादि कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशगर्भकसाहित्यमावश्यकम् ।"

साहित्योद्देश्यविषये विविधविदुषां बिभिन्नमतमस्ति । मनोवैज्ञानिक मतेन प्रत्येकप्राणी अहंभावनाप्रकटयितुमीहते । स्वभ्प्रकाशयितुं प्रवृत्तिस्तु अतिप्राचीना । ईदृशात्मप्रकटीकरणभावनयाप्रेरितं साहित्यमभूत् । आदर्शवादिनां निश्चितधारणाऽस्ति यत् साहित्यमीदृशप्रौढ़प्रयत्नोस्ति यन्माध्यमेनाखिले विश्वस्मिन् रागात्मकसम्बन्धःस्थाप्यते । नीतिज्ञानामभिप्रायोऽयं यन्मनस आत्मनेश्चपरिष्करणमात्रमेव साहित्यप्रयोजनम् ।

साहित्यं विभिन्न प्रान्तेऽनेक प्रकारेण लिखितम् । यदि निरपेक्षभावेन विचारणा स्यात्तर्हि, इदमेवतत्त्वं बर्हिर्भविष्यति यत् सकलसाहित्यं समाजोन्नत्युद्देश्येन नहि निर्म्मितम् । अधिकांशसाहित्यानि तु, ईदृशानि प्राप्यन्ते

यानि दुर्भावनापूर्णानि केवलंद्वितीयावस्थां गतानां मानवानां विनोदाय
एव । किन्त्वधुना सङ्कटकालीन भारतीयसमुदायार्थं साहसवर्द्धक
ओजस्विपूर्ण साहित्यस्य परमावश्यकता वर्तते ।

जैनेन्द्रेणोक्तम्—समाजाय द्विप्रकारकं साहित्यमावश्यकम् । एकस
स्वीकृतिजन्यजड़साहित्यम् । अपरस्यास्वीकृतिजन्यं निरन्तरगतिशी
साहित्यम् । यत् स्वसमये मनोऽनुरञ्जयत् भारवाहकान् एकत्रराशीकुर्व
प्रचलति, तदुपर्य्युक्तप्राथमिककोटौ समाविशति । यत् सामाजिकग
विधिमेवं मान्यताश्च प्रविहाय भाविनि विषये कल्याणमयीं दृष्टिं विदधा
तद्द्वितीयकोटौ निवसति । इयं कोटिः समाजगलितजड़कुण्ठान् ए
रूढ़िम्प्रति चाऽसन्तोषं प्रकटयन्ती स्वप्रतिभासा ईदृशप्रकाशसाधनमादा
प्रचलति युगयुगान्धकारान् विनाशयति । तत्प्रकाशसाधनं भाविपरम्पर
णामपि पथः प्रदर्शयति । उपर्युक्तभागद्वयसाहित्यात्, द्वितीयकोटि
साहित्यम् (अर्थादस्वीकृतिजन्यनिरन्तरगतिशीलसाहित्यम्) आधुनि
भारतीयसामाजिकजीवनोत्थानार्थमत्युपयोगि भविष्यति ।

राजनीतिकसङ्घटनं समाजोत्थापनस्योपायरूपेण ग्रहणं सर्वेषाम
मतमेव । भारतीयजनता आधुनिकयुगस्यचरमसुखोत्कर्षस्य लाभमपेक्षते
राजनीतिकसङ्घटनानि देशस्य शासने व्याप्तानि । उच्चाधिकारि
विभिन्नसङ्घनेतार एवंप्रत्येकजनस्यापेक्षितं लाभं यावच्छक्यं समधि
कारयितुं हेतुः । अतस्तेषां विविधगुणयोग्यता एवंदशविधसामान्यध
सम्पन्नता यदि प्रयत्नेनाधिगता स्यात् तदा विभिन्ननेतृणां तदनुयायि
तत्प्रभावितानां भारतीयजनानां विकासोऽवश्यम्भविता ।

वैज्ञानिकयुगस्याऽस्मिन्प्रज्ज्वलिताकाशे वयं तिमिरैराच्छन्ना ए
वयं तादृशं समाजमपेक्षामहे, यस्मिन्वर्गसङ्घर्षस्याऽवसरो नैव स्या
सर्वे स्वविवेकमनुसृत्य जीवनं यापयितुं शक्नुयुः । अथ च समविवे
स्वेतरस्य कस्यापि हानिप्रदोऽपि न भवेत् । क्वचिदैश्वर्य्यचाकचि
पतित्वा कुपथं न गच्छेम । एतदर्थमध्यात्ममार्गस्याप्यावश्यकता व
एव । सर्वाण्येतानि सम्पादयितुं वयं स्वशिक्षापद्धतौ परिवर्त्तनमपि
कुर्य्याम । भारतस्य प्राचीनाऽऽदर्शा नूतनेऽस्मिन्युगे नवीनया व्याख

व्यावृत्ता अस्माभिर्ग्राह्या एव । यावच्छक्यं तान् प्रयुञ्जीमहि तथा विदेशस्य समाजस्यापि गुणान् गृह्णीयाम । सत्यमुक्तम् ।

वेदाः शास्त्राणि धर्म्माः शुचिरुचिरुचिरा आश्रमा वर्णभेदाः
देवावासाः सतीर्था ऋषिमुनिसहिता संस्कृतिः सभ्यता च ।
शूरैर्वीरैरुदग्रं जगति बहुमतं भारतं राष्ट्रमुद्यत्
ज्ञानं विज्ञानमर्थो निखिलमिदमिह कृष्ण ! नोऽक्षुण्णमस्तु ॥



## तृतीयकिरणः

# संस्कृतिजागर्तौ संस्कृतस्योपकारकत्वम्

अद्यतने युगे भारतीयप्राचीनसंस्कृतिजागर्तौ संस्कृतभाषायाः कीदृशं महत्त्वं कियदुपकारकत्वञ्चास्तीति विषयमवलम्ब्य प्रस्तूयतेऽयं प्रबन्धः।

**उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।**
**वर्षन्तद्भारतं नाम भारती यत्र सन्ततिः॥**

अस्मिन्भारतवर्षे बहुविधजनानाम्बहुविधाः प्रचलिता भाषाः सन्ति। तासां सर्वासां भाषाणाञ्जननीयं संस्कृतभाषा विद्यते। भारतीयसंस्कृति-विकासे तत्प्रतिष्ठायाञ्च सर्वप्रथमं स्थानं संस्कृतभाषाया एव। ऋग्वेदादारभ्योपनिषत्पुराणोपपुराण-रामायण-लौकिकसंस्कृत-पर्यन्तं सर्वविषया अस्यां भाषायां समुपलभ्यन्ते। संस्कृतभाषैव भारतस्यैकराष्ट्रियत्वमपि विहितवती। यदि नाम संस्कृतभाषाऽपर भारतीयप्रचलितभाषावदुपेक्षिता स्यात्तर्हि भारतीयसंस्कृतिरपि मूलतः उच्छिन्ना भविष्यति, फलतो भारतवर्षस्य भारतीयताऽपि विनष्टा जायेत नात्र सन्देहलवः।

केचन जनाः संस्कृतभाषां मृतभाषां कथयन्ति, परन्तु ईदृशा जनाः स्वयमेव मृतप्रायाः सन्ति। यस्यां किल मन्त्रद्रष्टरो महर्षयः स्वकीयआध्यात्मिकमाधिदैविकमाधिभौतिकञ्च दिव्यं तत्त्वज्ञानं सविज्ञानं शिक्षा-दीक्षा-सदाचार-चारित्र्य-भास्वरमक्षर-संस्थाननिबद्धाकारप्रकारं छन्दोमय्या श्रुतिपरम्परया स्मृतिपद्धत्या च निबबन्धुः, तथा तामेतां देववाणीं समस्त विश्वचित्तानामिवोपकारकत्वरूपेण सप्राणां स्वस्थां जीवन्तीं प्रमाणयामासुः।

भारतीयसंस्कृतिजागर्तौ संस्कृतस्योपकारकत्वविषये तु बहूनि प्रमाणानि सन्ति। भारतीया या संस्कृतिः सा राष्ट्रिया संस्कृतिः सा च संस्कृतभाषामन्तरा स्थातुं न शक्नोति। सा संस्कृतिरनेकासु भारतीय भाषास्वपि सन्निहिता दृश्यते। भाषाणां मध्ये श्रेष्ठपरा प्राचीनभाषा संस्कृतभाषा विद्यते, अतएव—भारतीयसंस्कृतेरुन्नत्यर्थं संस्कृतभाषाया अध्ययनाऽध्यापने सविशेषं व्यवस्थापनीये। साम्प्रतं तासु भारतीयभाषासु केवलं संस्कृतस्य माहात्म्यं भारतेऽन्यदेशेष्वपि सर्वत्रैव विराजते। सा भाषा सर्वासां भारतीयभाषाणाञ्जननीरूपेण समादृता च विद्वद्भिः।

अस्माकं राष्ट्रियसाहित्यं प्राचीन कालतोऽद्यावधि सविशेषं संस्कृत भाषायामेव वर्तते । हिन्दीभाषायामन्यासु वा भारतीयाभषासु सन्ति नामांगुलिगणनीया एव राष्ट्रियसाहित्यकक्षायोग्या ग्रन्थाः । अथ च शतशो ग्रन्था वेदोपनिषद्रामायणमहाभारतपुराणोपपुराणादयः, अन्ये वा बहुविधविषयस्पृशो महाकवीनामार्य्याणाञ्च संस्कृतग्रन्था राष्ट्रिय साहित्यकोटिमवगाहन्ते । भारतीयानां समग्रसंस्कृतयः संस्कृतभाषाबद्ध ग्रन्थानां मध्ये लिपिबद्धाः सन्ति । यदि तु भारतीयसंस्कृतेर्जागर्तिर्भविष्यति तर्हि कथं संस्कृतस्योपकारकत्वं न भविष्यति ।

इदानीन्तु प्रश्नः भवितुमर्हति,—का भारतीयाः संस्कृतयः ? क्व च तासामाचारो विचारः कथंवाऽधुना स्वतन्त्रे धर्म्मनिरपेक्षे भारतराष्ट्रे तासां पालनं सम्भविष्यति ?

एतासां विचिकित्सानां निरसनन्तु संस्कृतसाहित्यस्य प्राचीनतम ग्रन्थद्वारेणैव सम्भविष्यतीति, यतो हि संस्कृतभाषामन्तरा काप्यन्या प्रचलिता भाषा प्राचीनतरा नास्ति । महाभारते साधूक्तम्—

यच्चेहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।

अस्माकं भारतवर्षम् आसृष्टिकालादेव वर्णाश्रमाचारयुक्तं विद्यते । अत्रैव समग्राचारविचारा वर्णाश्रमयुक्ताः । वर्णाश्रमधर्म्मस्तु स्वयं परमेश्वरेण सृष्टः, यथा गीतोपनिषदि भगवता श्रीष्णेन कथितम् ।

"चातुर्वर्ण्यं मया सृष्टं गुणकर्म्मविभागशः" गुणकर्म्मविभागानुसारेणैव वर्णाश्रमाणां सृष्टिरस्ति । ब्राह्मणक्षत्रियविट्शूद्राः वर्णाः । ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासाश्रमाः सन्ति । एतेषां ये ये तदाचार समूहाः शास्त्रविहितास्ते ते सदाचारा एव भारतीयाः संस्कृतयः सन्ति । गर्भाधानसंस्कारादन्त्येष्टिसंस्कारावधि सर्वे संस्काराः—भारतीयसंस्कृतौ समाविशन्ति । एतेषां संस्कारविषयाणां शिक्षणेन सह संस्कृतभाषायाः, व्याकरणदर्शनादिविषयाः शिक्षणयोग्याः, तच्छिक्षाद्वारेणैव भारतीय संस्कृतेरुन्नत्या सह संस्कृतस्याप्युन्नतिर्भविष्यति ।

एतद्व्यतिरिक्तं भारतीयसंस्कृत्या सह सामाजिकव्यवस्था-संरक्षणाय भारतीयनिखिलप्रान्तैर्यतितव्यम् । यतो हि समाज-सङ्घटनमेव स्वराष्ट्राभ्युदयस्य कारणम् । विचारणीयोऽयं विषयो यत् सामाजिकसङ्घटनपद्धतौ तथा भारतीयसंस्कृतेरभ्युन्नतौ च कीदृशं संस्कृतस्योपकारकत्वं योगदानं वा विधेयम् ? वर्तमान-कालिकप्रवृत्तिम्प्रति पूर्वकालिकव्यवस्था स्वीकरणीया । भारतीय-प्रतिनिधि-भूतेषु सम्पूर्णसंस्कृतेर्मूलस्वरूपेषु वेदग्रन्थेषु सामाजिकव्यवस्थाऽधोलिखितमन्त्रे निर्दिष्टा—

ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृतः ।
ऊरू ततदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत ।।
(शुक्लयजुर्वेदः)

भारतीयसंस्कृतेरुन्नतिदृष्ट्या प्राचीनकालादेवेयं वर्णव्यवस्था क्रमव्यवस्थारूपेण वर्गीकृता आसीत्, परं कालक्रमादियम्प्रथा रूढ़िमापन्ना। एतदविस्मरणीयं यदाधुनिककलुषितसामाजिकप्रवृत्तीनामस्पृश्यता-सङ्करादि दोषाणाञ्च दूरीकरणार्थं संस्कृतनिष्ठवेदवाक्यस्योपादेयत्वं "कृण्वन्तो विश्वमार्यम्" इति वेदवाक्यं कन्नमोहयितुं शक्नोति । एवमेव वसुधैव कुटुम्बकमिति महाभारतवाक्यं, शुनि चैव श्वपाके च-पण्डिताः समदर्शिनः" इति श्रीगीतावचनं च भारतीयसंस्कृतिसंस्कृतयो-रनिवार्यतां द्योतयति ।

राजनीतिकदृष्ट्यापि संस्कृतेरभ्युन्नत्या सहैव घंस्कृतस्योपकार-कत्वमधिकमेवाऽस्ति। राजा स्वशासनाधिकारः कथं रक्षणीयः ? स्वनियन्त्रणे कथं स्थापनीयश्च यथा स्वदेशे सुखैश्वर्य्ययोरुत्थानं पुनर्भविष्यति । एतदर्थं संस्कृतग्रन्थपठनादेव ज्ञातव्यम् । यदीयं संस्कृतभाषा प्रोत्साहिता स्यात्तथा विदुषामभिमतं ग्राह्यं भवेत्तदाऽवनतिगर्ते पतन्नयं देशो रक्षितो भवेत् । एतद्विषये भर्तृहरिनीतिचाणक्यनीतिमनुस्मृतिशुक्रनीतिविदुरनीतिग्रन्था विशेषोपयोगिनः सन्ति । इदानीन्तु एतेषां ग्रन्थानां पठनपाठनविषयेऽधुना-तनच्छात्रवर्गाः शिथिलीभूताः दृश्यन्ते । नेदमुचितम् । महापुरुषाणां वाणी नावमाननीया ।

यद्वा आधुनिके वैज्ञानिकयुगेऽपि संस्कृतस्य भारतीय-संस्कृत्या सहोपकारकत्वं बुद्ध्यैवाऽस्मदीयशासकवर्गः संस्कृतस्योन्नतये प्रयत्नशीलोऽभवत् १९५५ ईसवीये वर्षे संस्कृतप्रचारायैकः सङ्घो निर्म्मितः । यस्मिन् भारतशासकवर्गेण केन्द्रीयसंस्कृतमण्डलं गठितम् । तत्र विद्वन्मूर्धन्याः श्री एस्० एन० एम० त्रिपाठी ( वाराणसेयसंस्कृतविश्वविद्यालयस्य भूतपूर्वोपकुलपतिः ) "डॉ० उमेशमिश्रः" "कामेश्वरसिंहदरभङ्गा विश्व-विद्यायलयस्य भूतपूर्वोपकुलपतिः" डॉ० वी० राघवन् ( मद्रास विश्व-विद्यालयीयसंस्कृतविभागाध्यक्षः, इत्यादि महोदयाः सदस्या आसन् ।

ततश्च १९७० इसवीये वर्षे जनवरी मासे देहली राजधान्यां संस्कृत-स्य अन्ताराष्ट्रियं सम्मेलनमायोजितमासीत् यस्मिन्नवसरे संस्कृतस्याऽध्ययनाऽनुशीलनसन्दर्भान् आश्रित्य सुनियोजिताः क्रमाः स्वीकृता आसन् । यस्मिन्सम्मेलने डॉ० मण्डनमिश्रमहाभागाः प्रधानकार्यकर्त्तारोऽभवन् । इदानीन्तु संसारस्य बहुषु राष्ट्रेषु संस्कृतस्याऽनुशीलने सुरुचिर्जागर्ति,

विशेषतया संस्कृतस्योन्नयनार्थमुत्तरप्रदेशे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, उत्कलप्रान्ते श्री जगन्नाथ-संस्कृतविश्वविद्यालयस्तथा वङ्ग-विहार-पञ्जाब - मैसूर-प्रान्तेष्वपि तत्तत्संस्कृतविश्वविद्यालयाः केन्द्रीय संस्कृतसंस्थानादयश्च स्वीयकार्यं प्रणाल्या-संस्कृतभाषायाः, अभिवृद्धयर्थं कार्यं विदधति ।

साम्प्रतमुत्तरप्रदेशीयसर्वकारेण संस्कृताऽध्यापकानां कृते मासिक वेतनादिवितरण-विधानं व्यवस्थापितं, यत्त्वितः पूर्वं नासीत् । एतस्य सम्पूर्ण श्रेयोऽत्रत्यानां संस्कृतविद्यालयानां भूतपूर्वनिरीक्षकाणां डॉ॰ उमाशङ्करमिश्रमहाभागानां वर्तते । यैः स्वकार्यकाले बहुकालोपेक्षितानां संस्कृतविदुषां बहुयोजनाभिः भूयसी सेवा कृता । या सहृदयैर्विद्विद्भिश्च न विस्मरणीया । अतो युक्तमिदं भाति यत् संस्कृतिजागतौं संस्कृतस्योपकारकत्वमक्षुण्णमिति ।



# चतुर्थकिरणः

## "अवतारतत्त्वम्"

अनन्तब्रह्माण्डनायकस्य परमेश्वरस्य भगवतः संख्यातीता अवतारा वर्ण्यन्ते। पुराणशिरोमणेः श्रीमद्भागवतस्य सिद्धान्तानुसारेण चतुर्विंशत्यवताराणां कथाः समुपलभ्यन्ते। ते सर्वेऽवताराः षट्सु भागेषु विभक्ताः श्रीगौडीय वैष्णवाचार्यमतानुयायिनि श्रीचैतन्यचरितामृतग्रन्थे निम्नाङ्कितरूपेणोपवर्णिताः।

**अवतार हय कृष्णेर षड्विध प्रकार।**
**पुरुषावतार एक लीलावतार आर॥**
**गुणावतार आर मन्वन्तरावतार।**
**युगावतार आर शक्त्यावेशावतार॥**

अर्थात् (१) पुरुषावतारः (२) गुणावतारः (३) लीलावतारः (४) मन्वन्तरावतारः (५) युगावतारः (६) शक्त्यावेशावतार इति। भगवतः परमेश्वरस्य षड्विधा अवताराः सन्ति। एषामेवावताराणां भक्तिशास्त्रेषु निम्नाङ्कितरूपेणापि विभाजनं विलोक्यते। पुरुषावतारः सर्वावतारमूलस्य श्रीकृष्णविग्रहस्य, द्वितीयदेहस्वरूपसङ्कर्षणस्यान्तर्गते तदंशस्वरूपः।

(१) **प्रथमपुरुषः**—कारणार्णवशायी विष्णुः (प्रकृतेरन्तर्यामी महास्रष्टा)

**द्वितीयपुरुषः**—गर्भोदकशायी विष्णुः (ब्रह्माण्डस्य सृष्टिकर्ता)

**तृतीयपुरुषः**—क्षीरोदकशायी विष्णुः (प्रत्येकजीवस्य हृदयेऽन्तर्यामिपरमात्मनः स्वरूपभूतोऽनिरुद्धो विष्णुः)

(२) **गुणावतारः**—सत्त्वगुणविशिष्टो विष्णुः, रजोगुणविशिष्टो ब्रह्मा, तथा तमोगुणविशिष्टो महेशः, इति त्रिधा विभक्तः।

इत्येव बाणभट्टेन कादम्बर्य्यामाकलितम्—

**रजोजुषे जन्मनि सत्त्ववृत्तये,**
**स्थितौ प्रजानां प्रलये तमः स्पृशे।**
**अजाय सर्गस्थितिनाशहेतवे,**
**त्रयीमयाय त्रिगुणात्मने नमः॥**

(३) **लीलावतारः**—पञ्चविंशतिविधः प्रकीर्तितः । भगवतः पमेश्वरस्य लीला—अवाङ्मनसगोचरा अचिन्त्या च वर्णिता । कारणवशाल्लीलां प्रकटयितुं भगवता यत्स्वरूपं स्वीक्रियते तदेव रूपमैकान्तिकभक्तैर्लीलावतार रूपेणाङ्गीक्रियते ।

(१) चतुः सनः—सनत्कुमारः, सनकः, सनन्दनः, सनातनश्चेति चत्वारोऽपि, एकावताररूपेण गृह्यन्ते ।

(२) नारदः ।

(३) वराहः—अयमवतारो द्विप्रकारकः प्रथमो वराहः श्यामवर्णः चतुष्पादयुक्तः पृथ्व्याः उद्धारकर्ता ब्राह्मकल्पे स्वायम्भुवमन्वन्तरे ब्रह्मणो नासिकारन्ध्रादाविर्भवति ।

द्वितीयो वराहः—नृवराहः श्वेतवर्णः, असुरश्रेष्ठस्य हिरण्याक्षस्य विनाशकर्ता । ब्राह्मकल्पे चाक्षुषमन्वन्तरे जलादुद्भवति ।

(४) **मत्स्यः**—(५) यज्ञः, (६) नरनारायणौ, (७) कपिलः (देवहूतिकर्दमपुत्रः) । (८) दत्तात्रेयः ( अनसूयात्रिपुत्रः ), (९) हयशीर्षा ( हयग्रीवः ) वेदानामुद्धारको मधुकैटभदंत्यहन्ता ब्रह्मणो यज्ञाग्नेराविर्भूतः । (१०) हंसावतारः (देवर्षिनारदं प्रति भक्तियोगस्योपदेष्टा) । (११) पृश्निगर्भः (कुमारध्रुवस्यतपश्चर्यया प्रसन्नतां गतो ध्रुवलोकप्रदाता) (१२) ऋषभः (नाभि सकाशान्मेरुदेव्यां पुत्ररूपेणोत्पन्नः परमहंसधर्मोपदेष्टा) (१३) पृथुः (वेणनामकराज्ञो दक्षिणबाहोर्मुनिभिः समुत्पादितो भगवर्द्धमशिक्षाप्रदायको यश्च पृथग्वत्सपात्रादिकल्पनया ) पृथिवीं दुदोह (१४) नृसिंहः (भक्तविद्वेषिणो हिरण्यकशिपोर्हृदयविदारकः प्रह्लादाह्लादविधायकश्च) (१५) कूर्मः (समुद्रमन्थनकाले निजपृष्ठे मन्दराचलधारणकारी) (१६) धन्वन्तरिः (आयुर्वेदप्रवर्त्तकः) (१७) मोहिनी (दैत्यमोहनार्थं स्त्रीविग्रहधारी) (१८) वामनः (महाराजस्य बलेः सकाशात् त्रिपादभूमियाचकः) (१९) परशुरामः अथवा भार्गवः ((जमदग्नेः सकाशात् रेणुकायां जात एकविंशतिवारं भूतलसकलक्षत्रियान्तकः) (२०) रामः (दशरथात्मजो मर्यादापुरुषोत्तमः) (२१) व्यासः (वेदविभागकर्त्ता) (२२) बलरामः (वसुदेवाद्रोहिण्यां समुत्पन्नः) श्रीकृष्णः (वसुदेव-देवकीगर्भसम्भूतश्चतुर्भुजमूलविष्णुः) (२४) बुद्धः (अहिंसाधर्म-प्रवर्त्तकः) (२५) कल्किः (सम्भलपुरग्रामे विष्णुयशोगृहेऽवतीर्य अश्वारोही सन्म्लेच्छविदारको विष्णुः ।

(४) **मन्वन्तरावतारः**—चतुर्दशप्रकारकः १. यज्ञः, २. विभुः ३. सत्यसेनः, ४. हरिः, ५. वैकुण्ठः, ६. अजितः, ७. वामनः, ८. सार्वभौमः,

९. ऋषभः, १०. विष्वक्सेनः, ११. धर्मसेतुः, १२. सुधामा, १३. योगेश्वरः, १४. बृहद्भानुरिति ।

**(५) युगावतारः**—सत्ययुगे शुक्लवर्णः, त्रेतायुगे रक्तवर्णः, द्वापरे कृष्णवर्णः, तथा कलियुगे पीतवर्णः, इति चतुर्षु युगेषु वर्णचतुष्टयधारी विष्णुः ।

**शुक्लो रक्तस्तथापीत इदानीं कृष्णतां गतः ।**

(भा० १०-८-१३ गर्गवचनम्)

**(६) शक्त्यावेशावतारः**—एवम्भूतावताराः संख्यातुमशक्याः । प्रमाणानि पुराणादिशास्त्रेषु बहुधा वर्णितानि । श्रीगीतोपनिषदि भगवतैव श्रीमुखात्प्रतिपादितम् । यथा हि—

**यद्यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ।।**

यद्यप्युपर्युक्तावतारेषु दाशरथेः रामस्य तथा वसुदेवपुत्रश्रीकृष्णस्याप्युल्लेखो विहितः परं लीलावतारेषु राम एव मर्यादापुरुषोत्तमरूपेण गृहीतः । श्रीकृष्णस्तु लीलापुरुषोत्तमः सकलावताराणामवतारी च । अस्मादेव सर्वेऽवताराः समुद्भवन्ति । अतएव हि—श्रीमद्भागवते सूतशौनकसंवादे प्रतिपादितमस्ति—

**"एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" ।**

(भा० १-३-२८)

उक्तञ्चैतदवतारसम्बन्धेषूज्ज्वलभक्तिरसाचार्य्येण सरसललित काव्यप्रणयिना जयदेवेन गीतगोविन्दगुम्फकेन—

**वेदानुद्धरते, जगन्निवहते, भूगोलमुद्बिभ्रते ।**
**दैत्यान् दारयते, बलिं छलयते, क्षत्रक्षयं कुर्वते ।**
**पौलस्त्यं जयते, हलं कलयते, कारुण्यमातन्वते ।**
**म्लेच्छान् मूर्च्छयते, दशाकृतिकृते कृष्णाय तुभ्यं नमः ।।**

—०—

# पञ्चमकिरणः

# 'सम्पत्तौ च विपत्तौ च महतामेकरूपता'

अस्मिन् संसारे बहवोजना निवसन्ति, सर्वेजनाः समानरूपेण स्थातुं नेच्छन्ति। जनमनसि स्वाभाविकरूपेण नानाविधा अभिलाषाः सञ्जायन्ते। तेषामभिलाषाणां वशवर्त्तिभिः मानवैर्बहुयातना उपभुज्यन्ते सह्यन्ते च। यदा ताः सोढुमशक्या भवन्ति तस्मिन्काले बहुविधनिन्दित कर्मजला न्यव गाहन्ते।

परन्तु तेषां साधारणजनानां मध्येष्वपरे केचिन्महापुरुषाः अलौकिकाश्चातिमर्त्त्या भवन्ति। येषां चरित्राणि उज्ज्वलानि भवन्ति। ये आदर्श पुरुषरूपेण सर्वैः। परिगण्ययन्ते। ते ऋजुस्वभावेन च सर्वेषां सन्तोषमावहन्ति। तेषांमनसिवचसि कर्म्मण्येकरूपता दृश्यते। दुरात्मनान्तु तद्वैपरीत्यं दृश्यते।

**उक्तं च—मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनाम्।**
**मनस्येकं वचस्येकं कर्म्मण्येकं महात्मनाम्॥**

ये महान्तः सागरसमा गम्भीराः सन्तः स्वकार्याणि साधयन्तोऽन्येषां कृते आदर्शभूता भवन्ति। येषां हृदयं निसर्गतः विशालं, उदारं, गुणग्राहकं भवति तेषां विपदि धैर्य्यम्, अभ्युदये क्षमा, सदसि वाक्पटुता, यशः कार्येरुचिः, वेदादिशास्त्रे व्यसनम् एतानि स्वभावतः सिद्धानि भवन्ति। ते सम्यक्तयाजानन्ति—

**सुखमापतितं सेव्यं दुःखमापतितं तथा।**
**चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च॥**

एतेषां महच्चरितानां जनानां विषयेऽस्माकं भारतवर्षे अनेका वार्ताः श्रूयन्ते। अस्यां भूमौ बहवो महापुरुषाः अजायन्त येषां मध्ये वाल्मीकि-व्यास-बुद्ध-शङ्कर-रामानुज-मध्वनिम्बार्क - विष्णुस्वामि - रामानन्द - दयानन्दादयः प्रसिद्धाः सन्ति। एते महाभागाः भगवत्प्रेरणया स्वान् स्वान् धर्मान् प्रचारयन्तः उच्चतमकोटिकान् ग्रन्थान् व्यलिखन्।

सार्वभौमधर्म्मादारभ्य स्वात्मकल्याणपर्यन्तं धर्म्मा वर्णिताः सन्ति। एवम्भूतानां महापुरुषाणां सुदुर्लभदर्शनं यदि न भवति तर्हि तु तेषां लिपिबद्धा वाणी एव अधीता आचरिता च सती अस्माकं कल्याणं विधास्यति।

**सम्पदि यस्य न हर्षो विपदि न विषादो युधि च शूरत्वम् ।**
**तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥**

उक्तलक्षणलक्षितानां विरलपुत्राणां जीवनेष्वपि न जाने कियती बाधा समायाति, परमटलाविचलसुदृढ़हृदयानां पक्षे वज्रादपि दारुण दुःखमपि यातनाअपि तेषां सम्मुखेऽञ्जलिं बद्ध्वा किङ्करा इव सुखप्रदानार्थं प्रार्थयन्ति अर्थात् समचित्तत्वात् दुःसखेष्वपि दुःसहकार्याणि कर्त्तुं ते प्रभवन्ति। तथाहि—

जगद्गुरुराद्यश्रीमच्छशङ्कराचार्यः स्वदिग्विजययात्रायां सर्वप्रथमं काशीं विजित्य काशीतः प्रस्थाय स गिरिकानान्यनेकानन्यतिक्रम्य बदरीपुण्य भूमिंप्राप्य तत्र द्वादशवर्षाणि यावत्प्रस्थानत्रयीभाष्याणि उपदेशसहस्रिका-दीननेकान् ग्रन्थांश्च प्रणिनाय। बदरीतो दक्षिणदिशामालम्ब्य स प्रयागमा-गच्छत्। आगत्य च प्रधानमी मांसक-कुमारिलभट्टाचार्येण संलप्य ततोऽसौ माहिष्मतीं नाम नगरीं प्राप्य विद्वन्मूर्द्धन्यैः श्रीमण्डनमिश्रैः सह शास्त्रार्थं कृतवान्। मण्डनस्य सहधर्म्मिण्या शारदया भारत्या इदं निश्चितं यत्—

**माला यदा मलिनभावमुपैति कण्ठे ।**
**यस्यापि तस्य विजयेतरनिश्चयः स्यात् ॥**

ततश्च तस्याः कथनानुसारेण तद्विधानेन शास्त्रार्थे मिश्रमहोदयं पराजित्य भारत्या सह शास्त्रार्थं कर्त्तुं स्वीचकार।

सकलशास्त्रपारङ्गममथ च कामशास्त्रानभिज्ञं शङ्करम्प्रति भारत्या कृतोऽयं प्रश्नः—

**कलाःकियन्त्यो वद पुष्पधन्वनः**
**किमात्मिकाः किञ्च पदं समाश्रिताः ।**
**पूर्वे च पक्षे कथमन्यथास्थितिः**
**कथं युवत्यां कथमेव पूरुषे ॥**

अनेन शङ्करोऽनभिज्ञत्वात्तथा स्वमर्यादारक्षणात् मासत्रयावधि समयं प्रार्थ्य मृताऽमरुकशरीरे प्रविश्य तस्यान्तः पुरनार्य्या सह कामक्रीडां कृत्वा समस्तकामव्यापारानवबोद्ध्य पुनः प्रत्यावृत्य च शारदां विजितवान्। कथनस्याशयोऽयमाजन्मनैष्ठिकब्रह्मचारिणा सता श्रीमच्छङ्कराचार्य्येण कियती वा यातना न भुक्ता परन्तु सम्पत्तौ विपत्तौ चैक्यभावेन स्वमर्यादा शास्त्र-मर्यादा संस्थापिता।

एवंविधा अप्यस्मिन् भारते सर्वे साधवो महर्षयोऽपि, अन्ये बुद्ध-रामानुजरामानन्ददयानन्दादयः स्वजीवने भूयांसि सुखदुःखादीनि सोढ्वा सम्पत्तिकाले विपत्तौ च एकरूपतामुदयेऽस्तवेलायाञ्च सूर्यवत्प्रदर्शितवन्तः।

आधुनिके युगेऽपि महात्मगान्धिना भारतं स्वतन्त्रंकर्तुं कियतीः यातना न सेहिरे। पुरा कौरवकपटपाशैः अपहारितराज्याः पाण्डवा वन-वासिनःसन्तो निखिलयातनां सोढ्वाऽस्मिन्भारते महाभारते च सम्पत्तौ च विपतौ च महतामेकरूपतेति कीर्त्ति संस्थापितवन्तः। उक्तञ्च—

विपदि धैर्य्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम्॥



# षष्ठकिरणः

**गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः ।**
**या स्वयं पद्मनाभस्य मुखपद्माद्विनिः सृता ।।**

श्रीगीता श्रीमद्भगवद्गीता सुगीता कर्त्तव्या या गीता साक्षाद्भवत्कृष्णचन्द्रस्य मुखारविन्दान्निः सृताऽस्ति । उपर्युक्तश्लोके यस्या गीतायाः निर्देशो विद्यते सा गीता अन्यगीतानां विषयो नास्ति । यद्यपि पाण्डवगीता, उद्धवगीता, गोपीगीता, अवधूतगीता, रुद्रगीताप्रभृतयो गीताः सन्ति, परन्त्वस्मिन् श्लोके प्रतिपादिता गीता तु श्रीमद्भगवद्गीतैव । एतां विनाऽन्यविस्तृतशास्त्रस्याध्ययनेन नास्ति प्रयोजनं यतः सम्पूर्णशास्त्राणां विषया अस्मिन् गीताशास्त्रे निहिताः सन्ति । अस्या गीताया अध्ययने सति सम्पूर्णशास्त्राणामध्ययनफलमुपलभ्यते जनैः । गीताशास्त्रे मानवमात्रस्याधिकारोऽस्ति । स मानवो वर्णाश्रमान्तर्गतः कोऽपि किन्न भवतु परन्तु तेन परमानन्ददायके श्रीकृष्णपादपद्मेऽचला दृढ़ा च भक्तिर्विधेया । यत श्रीकृष्णेन स्वयमुक्तम्——"नाभक्ताय कदाचन" । भक्तिमान् जन एवास्या पठनाधिकारी भवति स तु भवतु नाम स्त्री वैश्यः शूद्रो वा । सोऽपि श्रद्धा भक्तिसहकारेणैव भक्तिपथावलम्बी जायते । उक्तञ्चात्र गीतायां भगवता स्वयमेव ।—

**मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।।**

( गीता ९/३२ ।।

**अपि च---यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।।**

( गीता १८/४६

अर्थादस्मात्परमात्मनः सर्वप्राणिनामुत्पत्तिः येन भगवता इदं जगत् व्याप्तं तं परमेश्वरं स्वस्य कर्मणा समभ्यर्च्य पूजयित्वा मानवः परां सिद्धिं स्वाभीष्टफलसिद्धिं प्राप्नोतीति एषां विषयाणां विचारे सति ज्ञायते यत् परमात्मप्राप्तौ सर्वेषामधिकारोऽस्ति ।

किन्त्वेतद्गम्भीरमर्मपूर्णविषयस्याऽज्ञानेऽवबोधने एवाधिकांशतो जनाः यैः श्रीगीताया नाममात्रं श्रुतं तैरेवेत्थमुक्तं यत् गीता तु केवलं संन्यासिनां योग्या। अस्याः गीतायाः अध्ययनेन नास्ति किञ्चिदपि प्रयोजनं गृहस्थानाम्। न केवलं एतावदेव ते गीता पठनार्थनात्मतनयानपि वर्जयन्ति। यतोहि कदाचित्सः स्वगृहकार्याण्युत्सृज्य संन्यासी न भवेत्। परं तेषां विचारोऽयं मोहमयः। स्वक्षात्रधर्म्माद्विमुखीभूय भिक्षालब्धान्नेन निर्वाहं कर्त्तुं प्रस्तुतेनार्जुनेन गीतोपदेशेनैवाजीवनं गृहस्थाश्रमे स्थित्वापि स्वकर्त्तव्यस्य पालनं कृतम्। अस्यां स्थितौ श्रीगीताशास्त्रस्येत्थं विपरीतो विपरिणामः कथं भवेत्, येन जनाः उत्सीदेयुः।

अतः कल्याणं कामयमानानां मनुष्याणामुचितमस्ति यत् ते स्वयं मोहमुत्सृज्याचलश्रद्धाभक्तिपूर्वकं स्वस्व - बालकेभ्यो भक्तिभावसहकारेण श्रीगीताशास्त्रस्याध्ययनार्थं मतिं प्रदद्युः स्वयं च आचरेयुः। भगवदाज्ञानुसारं तु मानवा भगवदाराधने तत्पराः भवेयुः यतः सुदुर्लभ-नरजन्मस्थामूल्यैकक्षणस्यापि दुःखमूलकक्षणभंगुरभोगे नष्टकरणं नोचितम्।

## श्रीगीताशास्त्रस्य प्रधानविषयाः

गीताऽध्ययनात्पूर्वं मनसि प्रश्नो जागर्ति। अस्मिन् विषयवस्तु किमस्ति? यदध्ययनमुचितम् प्रश्नोत्तरे तु—श्रीगीतोपनिषदि भगवता श्रीकृष्णेन स्यस्य प्राप्त्यर्थं प्रधानतो द्वौ मार्गौ कथितौ। एकःसांख्ययोगः, अपरश्च कर्मयोगः। तयोर्मध्ये सांख्ययोगस्य विषयोऽयमस्ति।

अस्मिन् जगति सम्पूर्णपदार्थाः मृगतृष्णासमस्वप्नसदृशमायामयत्वान्मायाकार्यरूपसम्पूर्णगुणा गुणेषु विद्यन्ते एव। इत्यवबुद्ध्य कायमनोवचोभिः समस्तकर्मसु कर्त्तृत्वाऽभिमानरहितं सर्वव्यापकसच्चिदानन्दघन परमात्मस्वरूपे सेव्यसेवकभावेन नित्यं निवसेत् इति सांख्ययोगस्य साधनसूत्रमस्ति।

द्वितीयस्तु विषयः कर्मयोगः। पृथिव्याः सम्पूर्णवस्तूनि भगवतामित्यव बुद्ध्य सिद्ध्यसिद्ध्योः समत्वभावं स्थापयन् फलासक्तिं विहाय भगवदाज्ञानुसारं केवलम्परमेश्वरार्थं सम्पूर्णं कर्मकरणीयमिति, यथा हि गीतायाम्—

**योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥**

(गीता २/४८)

तथा च श्रद्धाभक्तिपूर्वकं कायमनोवाक्यैः सर्वप्रकारेण भगवच्छरणं गत्वा तन्नामगुणयशोभिः सह तत्स्वरूपस्याहर्निशं चिन्तनमिदं निष्कामकर्म योगस्य साधनसूत्रमस्ति। परं द्वयोःसाधनयोः फलन्तु एकमेव साधनावस्था यामधिकारिभेदेन द्वयोर्भेदे सति पृथक्पृथक् कथितमस्ति। प्रमाणन्तु तस्याम्—

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्॥**

(गीता ५/४)

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।**
**एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति॥**

(गीता ५/५)

सांख्ययोगयोरभेदे सति साधनकाले पृथक्-पृथक् सत्ता विद्यते। यथा हि—

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्तामयानघ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥**

(गीता ३/३)

अत एकेनैव पुरुषेण द्वाभ्यां मार्गाभ्यामेककाले गन्तुमशक्यं यथैव—मन्दाकिनीगमनाय द्वयोर्मार्गयोस्थितयोः सत्योः एकःकालावच्छेदेन द्वाभ्यां पथिभ्यां गमनमसम्भवं तथैव साधनावस्थयां कर्मयोगस्य साधनं संन्यासाश्रमे भवितुं नार्हति, यतः संन्यासाश्रमे कर्मणः स्वरूपेऽपि त्यागः कथितः। अपि च सांख्ययोगस्य साधनं सर्वावस्थायां भवितुमर्हतीति।

यदि चेदित्थं कथय यद्भगवता श्रीकृष्णेन संन्यासनाम्ना सांख्य-योगउक्तः, अतस्तस्य साधनस्य संन्यासाश्रमे एवाधिकारो भवति गार्हस्थ्ये नास्तीति परं न युक्तमेतत्। यतो द्वितीयाऽध्याये एकादशमश्लोकादारभ्य त्रिंशश्लोकावधि यस्याः सांख्यनिष्ठाया उपदेशोऽक्रियत तदनुसारेणापि भगवता श्रीकृष्णेन स्थाने स्थानेऽर्जुनम्प्रति युद्धकर्त्तुं योग्यता प्रदर्शिता। यदि गृहस्थाश्रम एव सांख्ययोगस्याधिकारो नास्ति तदा तु भगवत्कथनं कथं समीचीनं भवेत्? ओम् इयती विशेषताऽवश्यं विद्यते यत् सांख्यमार्गस्याधिकारी देहाभिमानाद्रहितो भवेत्। यावच्छरीरेऽहंभावो वर्तते तावत्सांख्य योगस्य साधना सम्यक्तया बोधगम्या न भवति। अस्मात्कारणादेव भगवता सांख्ययोगो दुःसहः प्रतिपादितः। (गीता ५/६) तथा च निष्कामकर्मयोगस्य सुगमत्वादर्जुनम्प्रति प्रति स्थानमित्थमुक्तं हे अर्जुन! त्वन्तु मां चिन्तयन् निष्कामकर्मयोगस्याचरणं कुर्विति। इत्थं गूढविषयं गीताशास्त्रं मुहुर्मुहुश्चिन्तनीयं पठनीयञ्चान्तः शान्तिकरणार्थं भगवत्प्राप्त्यर्थञ्चेति।

**गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः।**
**या स्वयं पद्मनाभस्य मुखपद्माद्विनिः सृता॥ इति।**

# सप्तमः किरणः

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**

**स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ।।**

श्रीमद्भगवद्गीतायास्तृतीयाध्यायस्यैकविंशश्लोकोऽयम् । अस्मिन् श्लोके भगवता श्रीकृष्णेनार्जुनं प्रत्युपदिष्टम् । श्रीधरस्वामिपादेन एतत् सम्बन्धे स्वटीकायामित्थं लिखितम् । यद्—

"कर्मकरणे लोकसंग्रहो यथास्यात्तदाह—यद्यदेति । इतरः प्राकृतोऽपि जनस्तदेवाचरति, स श्रेष्ठो जनः कर्मशास्त्रं तन्निवृत्ति शास्त्रं वा यत् प्रमाणं मन्यते तदेवलोकोऽप्यनुसरतीति ।"

अस्मिन् स्थले विचारणीयोऽयं विषयः सदाचाररक्षार्थं जनकादि ऋषितुल्याः नराः शुद्धसत्त्वेन निष्कामकर्मणैव संसिद्धिं प्राप्नुवन्ति। यद्यप्यर्जुनः स्वं ज्ञानिनं मन्यमानः कर्म प्रत्यासक्तिशून्यो भूत्वा तत् प्रत्युदासीनतां प्रदर्शयति, तर्हि तु कृष्णोपदिष्टं वाक्य सार्थकसम्भवति—

हे अर्जुन ! यदि त्वं स्वात्मानं सम्यग्ज्ञानिनं मत्वा स्वकार्यं स्वधर्मं प्रत्यवहेलनां करोषि, तर्हि तु लोकसंग्रहार्थं—स्वधर्मप्रवर्तनं श्रेयस्करमिति । एतस्यायमाशयोयत् तव कर्मकरणेऽस्मिन्जगति अन्येऽपिजनाः स्वकर्म करिष्यन्ति गतानुगतिकत्वात् । अन्यथा पण्डितानां दृष्टान्ते अज्ञजना अपि स्वधर्मकर्मणोः परित्यागेनाधः पतिता भविष्यन्ति । एतादृग् विचारेण लोकरक्षार्थमवश्यं कर्म विधेयम् । कदापि तत्कर्मत्यागो नोचितः ।

खल्वस्मिन्नसारे संसारे पारम्परिकानुसारेणैव श्रेष्ठजनानामनुकरणम् अन्ये कुर्वन्ति, तेषां प्रमाणानुयायिन स्वजीवनस्य साधनां साधयन्ति अपरानुपदिशन्ति च । परमित्थं ते न जानन्ति पूर्वजनाः कीदृग्विचारदृष्ट्या तदाचणं कृतावन्तः, तेषामुद्देश्यं किमासीत् ? तदनुसारिणोजनाः कीदृक् पथारूढ आसन् । अहन्तु तदनुसरणे कीदृक् समर्थो भविष्यामीति ।

यतो ह्यनुसरणाऽनुकरणयोरन्योऽन्या गतिर्भवति । अनुसरणे मनः स्थितिराभ्यन्तरिकरूपेण प्रचलति, अनुकरणे तु बाह्यरूपेण तस्य स्थितिर्भावति । सदाचारिपुरुषाणां पक्षेऽकैतवधर्ममाश्रित्य स्वान्तः करणे सर्वजनहिताय कृष्णोपदिष्टार्जुनवत्स्वधर्मं पालयित्वास्मिन्जगति यशः पताकानामुड्डयनं परमं श्रेयस्करं भवति । अन्यथा स्वधर्मे निधनं श्रेयः परधर्मो भयावहः इति प्रमाणानुसारं स्वधर्मं त्यक्त्वाऽसत्पथावलम्बनेऽनेकजन्मार्जितकलिकलुषपङ्के निपतनं भवितुमर्हति । अतः श्रेष्ठानां शिष्टानाञ्चाचरणं पालनीयम् ।

□

# अष्टमः किरणः

## "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्"

अस्य धर्मस्य स्वल्पपरिपालनेऽपि महतो भयात् त्राणं भवतीत्यर्थ यथा कर्म्मणां गहना गतिस्तथा धर्माणां गहना गतिरिति कथनेऽपि काचिदत्युक्तिः। धर्मस्य परिभाषेयं ध्रियतेऽनेनेति धर्मः येन मनसि हृदयस्य वा कोऽप्यपरसुसमन्वयविचारसोपानं ध्रियते स एव धर्मः कथ्यते किन्त्वस्य धर्मस्येति कथने तु कस्यापि निर्दिष्टशाश्वतशास्त्रस्य ध परिस्फुटति। यस्य धर्मस्य स्वल्पमपि परिपालनँ महतो भयाद्रक्षति स ध कः? कुत्र कमाश्रित्य तिष्ठति वा?। इत्युत्तरे कथनमिदमुचितं यतो हि भागवतधर्मः भगवत्कोटिप्रविष्टो नित्यं भगवन्तंभक्तजनमाश्रित्य वा तिष्ठति

**अपरञ्च—सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥**

इति श्रीभगवदुक्त स्य श्लोकस्य सम्यग्विचारेण तस्य धर्मस्य सं ग्रन्थ्युन्मोचनं भविष्यति। तात्पर्योऽयं सर्वधर्मान् परित्यज्येति क पूर्वोपदिष्टसकामनिष्कामप्रवृत्तिनिवृत्त्यादिधर्मान् सर्वान् परित्य केवलमेकं मां श्रीमच्छ्यामसुन्दरविग्रहं शरणं प्रपन्नमागच्छ इ भगवच्छरणागतरूपधर्मस्य स्वल्पपरिपालनेऽपि महतो भयात् संर भविष्यति।

नादेवो देवमर्चयेत्, तदीयाभावेऽसिद्धेरिति वाक्यानुसा यावत्पर्यन्तं भगवच्चरणारविन्दे कायमनोवाक्यैः सर्वात्मना समर्पणं भविष्यत्तावत्पर्यन्तं दुस्तरसंसारसागरनिरन्तररतभीमनक्रभयात् नाभविष्यदिति सिद्धान्तः। यथोदाहरणतया कौरवसभायां दुर्योधनाऽऽ दुःशील दुःशासनेन पाञ्चाल्याश्चीरकर्षणावसरे त्रपाभयात्तापिता सा मां मधुसूदन! इत्युच्चारयन्ती स्वल्पधर्मबलेन स्वीयलज्जारक्षणपूर्वकम तज्जासमुद्रे निमज्जयामास। तथैव सुवर्णपुरि लङ्कायां भीषणराव भयाद्विभीषणो रामैकशरणत्वाद् रक्षितः। अपि च अजामिलगणिका बहवो जनाः सन्ति ये स्वल्पमपि भागवतधर्मावलम्बनं कृत्वैव प्रवन्धशी वाक्यं सार्थकमकुर्वन्निति।

□

# नवमः किरणः

## "गुरुपूर्णिमा एवं श्रीगुरुपूजा"

धर्मप्राणेऽस्मिन् भारतवर्षेऽनादिकालादद्यावध्यनेकाः महिमान्विता-स्तिथयः प्रचलिताः सन्ति। तासु गुरुपूर्णिमायाःमहिमा सर्वोत्तमः ख्यायते। जनपरम्परया "आषाढ़ी पूर्णिमा" 'गुर्णिमेति" मन्यते। स्थानभेदेनेयं विविधनामत्रिर्व्यवह्रियते। बङ्गप्रान्ते व्यासपूर्णिमेति नाम्ना, विहारो-त्कलकेरलमहाराष्ट्रगुर्जरोत्तरभारतेषु गुरुपूर्णिमेति नाम्ना व्यवहृतिं प्राप्ता।

वस्तूनां नामानि अंशतोऽपि वा गुणानुबन्धीनि भवन्ति इति गुरु-पूर्णिमायां धर्मानुरागिणो जनाः परम्परया गुरूणां पीठानि गत्वा गुरूणां विधिवत्पूजनानन्तरं चरणामृतं पिबन्त आत्मनो धन्यानामनन्ति। गुरुजना अपि श्रद्धालुभ्यः शिष्येभ्यः शुभाशीर्वादान् प्रददति।

समुदेत्ययं प्रश्नो यत् द्वादशमासेषु समायान्ति द्वादश पूर्णिमाः इति कथङ्कारमाषाढ़ी पूर्णिमैव गुरुपूर्णिमेति महिमानं सम्भजति ? धार्मिका जना अस्मिन्नेव दिने गुरून् अर्चन्ति। अस्मिन्नवश्यमेव किमपि गोपनीयं रहस्यमिति निम्नोक्तदिशा समाधीयते।

**यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥**

**(गीता ३/२१)**

इति वचनानुसारमस्मिन्पूर्णिमादिने आद्यशङ्कराचार्यो निजगुरु-मभिपूज्य संन्यासमन्त्रदीक्षां लेभे। इति परम्परया इयमेव गुरुपूर्णिमारूपेण सर्वैः स्वीकृता। अन्यच्च मन्त्रदीक्षायाः पूर्वं संन्यासिनो भद्रं (मुण्डनं) कृत्वा गुरोर्दीक्षामाददते, इत्येषा "मुडिया" पूर्णिमेति नाम्ना चाभिधीयते।

शास्त्रेषु विदितमस्ति यत् कृष्णद्वैपायन व्यास एव सर्वादिगुरुश्चतुरोऽपि वेदान् विभज्यासंख्यान् शिष्यान् वेदमन्त्रेषु—दीक्षितान् व्यदधादिति व्यासः सर्वप्रथमो गुरुरित्यायाति। अतएवेयं व्यासपूर्णिमेति श्रद्धयाभिधानं भजते। श्रीमद्भागवतसप्ताहेऽपि गुरुर्व्यासरूपेण तदासनञ्च व्यासपीठरूपेण गृह्यते। इति व्यासरूपिणं गुरुं समभ्यर्च्य सप्ताहस्यारम्भो—भवति।

अस्यामेव भगवत्साधका वैष्णवसंन्यासिनो मुण्डनं विधाय गुरुपूजना-नन्तरमस्माद्दिनादारभ्यचातुर्मास्यव्रतमनुतिष्ठन्ति। इत्युपर्युक्त नाम्नासंकेत्यते।

देवार्चनतोऽपि श्रीगुरुपूजाया अधिकं महत्त्वमस्ति। श्रीगुरुप्रसादादेव

देवानां महिम्नो ज्ञानं भवति । अत एव "सर्वदेवमयोगुरुः" इति शास्त्रीयः सिद्धान्तः । श्रीगुरुहृदये ईश्वरो निवसतीति भारतीयानामविचलो विश्वासः । अन्यदपि—ईश्वरे रुष्टे गुरुः शिष्यान् रक्षति किन्तु गुरौ रोषमापन्ने ईश्वरः स्त्राणदायको नैव भवति । इति शास्त्राणामभिमतं सर्वं मान्यमेव ।उक्तञ्च—

**"हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।"**

यदि तुष्टो गुरुर्हृदयविगलदाशीर्वचसा शिष्यं संयोजयति तदा परलोकेऽपि ध्रुवा सद्गतिरिति का कथैतस्य लोकस्य ?

गुरुरेव मुख्यतया श्रीभगवतः प्रियपात्रं भवति । गुरोर्माध्यमेनैव श्रीभगवान् कस्मिन्नपि स्वीयां कृपां वितरति । श्रीगुरौ भगवति च सर्व भावेनैक्यं, नैव कश्चन भेदः । श्रीभगवता साकं गुरोः विशेषः प्रेयान् सम्बन्धो भवति । भगवदन्तरङ्गसम्बन्धविशिष्टगुरव एव शिष्यजनकल्याणसम्पादनाय प्रभवन्ति । एतत्प्रतिकूला गुरवः केवलं शिष्यवञ्चकाः सिध्यन्ति । अत एव शास्त्रे गुरुशिष्ययोः परीक्षाया अपि नियमोवर्तते । श्रुतेरिदं वचनम्- "श्रोत्रियं ब्रह्मनिष्ठं गुरुं प्रपद्येत" गुरुशब्दस्य व्युत्पत्तिरपि निम्नाङ्किता—

**"गु" कारोऽन्धकारःस्यात् "रु" कारस्तन्निवृत्तिकः ।**
**अन्धकारनिवृत्तित्वाद् गुरुरित प्रकीर्तितः ॥**

अर्थात्—"गुः" अन्धकारपदार्थः "रुश्च निवृत्त्यर्थः" इति यः शिष्यजनस्याऽज्ञानान्धकारं दूरीकरोति स एव सत्यतमो वास्तविकः पारमार्थिको गुरुः ।

शास्यते इति शिष्यः— यः शासनं स्वीकरोति, अर्थात् शासनयोग्यो जनः शिष्यपदवाच्यो भवति । नतु सर्वे एव शिष्यपदभाजो भवितुमर्हन्ति इति सद्गुरुः प्रेयान् (सत्-) शिष्यः उभावपि चातितमौ दुर्ल्लभौ स्तः ।

शिक्षादीक्षाभेदाभ्यां गुर्द्विविधः । अनयोः शिक्षा गुरवोऽनेके भवन्ति किन्तु दीक्षागुरुरेक एव भवति । इत्थं शिष्यजनस्यापि वविध्यम्—एकः सांसारिकं ज्ञानमर्जयति, अपरश्च पारमार्थिकं ज्ञानमात्मसात्करोति । पारमार्थिकगुरवः पारमार्थिकाश्च शिष्याः "सांसारिकगुरुशिष्येभ्यो नितरां भिन्ना भवन्ति । स्वीयसद्ज्ञानेन शिष्याणामज्ञानरूपसमूलान्धकारनिरसनस्य शक्तिः सद्,(पारमार्थिके) गुरावेव सम्भवति ।

सांसारिकगुरूणां कार्यकालं यावदेव सम्बन्धः संसाधको भवति परं पारमार्थिकगुरुशिष्ययोः सम्बन्धोऽनादिकालं यावत् नित्यसम्बन्धविशिष्टो भवति । श्रीमद्भागवते महापुराणे भगवता स्वयमेव श्रीमुखेन

प्रतिपादितम् श्रीगुरुदेवो मनुष्यबुद्ध्या कदापि नैवावमन्तव्यः, यतोहि गुरुदेवः सर्वदेवमयो ममात्मभूतश्च ।

**आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।**
**न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ।।**

(भा० ११/१६/२६)

यथाभगवदर्चनं तथैव गुरोरर्चनमपि पञ्चोपचारैः देशोपचारैः षोडशोपचारैर्वा यथाशक्ति विधिपूर्वकं सम्पादनीयम् । बृहन्नारदीयपुराणे गुरु-महिमा ईदृशोवर्ण्यते—

**गुरुं तुंकृत्य हुँकृत्य यो वदेन्मूढधीर्नरः ।**
**अरण्ये निर्जने देशे भवति ब्रह्मराक्षसः ।।**

(बृ० ना० पु० ९/३३)

अर्थात्—यो मूढः गुरुसमक्षे तुंकारं हुंकारंवा विधायोच्चैर्वदति सः मरणोपरान्ते गुरोपरराधकारणाज्जनशून्ये वनप्रान्ते ब्रह्मराक्षसयोनौ जन्म गृह्णाति । गुरुनिन्दकस्य क्वापि निस्तारो न भवति ।

**गुरुनिन्दापराणाञ्च निष्कृतिर्नैव विद्यते ।**

( बृ० ना० पु० १४/६६ )

गुरु सेवापराणामपि फलमुक्तपुराणे निर्दिष्टम्—

**जितेन्द्रियास्तपोनिष्ठा गुरुशुश्रूषवस्तथा ।**
**प्रयान्ति ब्रह्मसदनमिति शास्त्रेषु निश्चितम् ।।**

(बृ० ना० पु० ९/३४)

अर्थात्—इन्द्रियाणि वशीकृत्य तपसि निष्ठावान् यो नरः गुरोः शुश्रूषां प्रयतो विदधाति स ब्रह्मसान्निध्यं लभते ।

वंशपरम्परागतकुलगुरोः सम्बन्धेऽपि तथैव भागवते स्पष्टीकृतम्— "गुरु र्न स स्यात्" इति सः वास्तविकः सद्गुरुनैव भवितुमर्हति य ईश्वरस्य चरणसरोजे सम्बन्धं नैव स्थापयितुं शक्नोति । निम्नाङ्कितवचनानुसारं ते गुरवो नित्यमेव वन्दनीयाः—

**अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।**
**तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।।**
**अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।**
**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।।**

**गुरुर्ब्रह्मा गुर्रुविष्णु:गुरुर्देवो महेश्वर: ।**
**गुरु: साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नम: ।।**

शास्त्रे इदमपि सिद्धान्तितम्—यदि सद्‌गुरोराश्रयणे कुलगुरोस्त्याग: सम्भवति तदपि नैव दोषों भवति । यावत् सद्‌गुरुणा नैव समागमस्तावत् कुलगुरोराश्रय: परमावश्यक: । गुरुर्नैव कदापि लघुर्भवितुमर्हति । इति शक्त्यनुसारं गुरु: सदैव भक्त्याभावनीय: । सामर्थ्यवानपि य: श्रद्धया गुरुं नैव समाद्रियते स त्रिकालेऽपि नैव क्षमामर्हति ।

सद्‌गुरुविषये श्री गौडीयवैष्णवाचार्याणां श्रीविश्वनाथचक्रवर्ति प्रभुपादानामियं वाणी सहृदयहृदयावर्जनी सर्वदैव चकास्ति—

**यस्य प्रसादाद्भगवत्प्रसादो,**
**यस्य प्रसादान्न गति: कुतोऽपि ।**
**ध्यायंस्तुवंस्तस्य यशस्त्रिसन्ध्यम् ।**
**वन्दे गुरो: श्रीचरणारविन्दम् ।।**

अर्थात्—यथा गुरुपादपद्मानुकम्पया भगवत: करुणा सहज सुलभा भवति । यस्याऽप्रसन्नतया, इह परत्र च क्वापि सद्‌गतिर्नैव लब्धुं शक्या, तस्य गुरो: शारदचन्द्रकिरणधवलं यशस्त्रिकालं ध्यायं ध्यायं तस्य चरणसरोरुहेषु पौन: पुन्येन प्रणतिं निवेदयामि ।

□□

# दशमः किरणः

# उपाकर्म रक्षाबन्धनं च

अस्मिन् भारतवर्षेऽतिप्राचीनकालाद्वर्णाश्रमधर्मस्य व्यवस्था प्रचलिता वर्तते। सर्वे वर्णा आश्रमाश्च स्वस्वधर्मानुष्ठाने कर्तव्यपरायणा भूत्वा स्वात्मानं धन्यं मन्यन्ते। चतुर्वर्णानां चत्वारि पर्वाणि सुनिश्चितानि सन्ति। ब्राह्मणानां श्रावणी,[1] (उपाकर्म) क्षत्रियाणां विजयादशमी, वैश्यानां दीपावली, शूद्राणान्तु होलिकेति कथ्यन्ते। एतानि पर्वाणि क्रमशः श्रावणाश्विनकार्तिकफाल्गुनमासेषु भवन्ति। यथा वर्णेषु ब्राह्मणोऽस्यमुखमासीदिति प्रामाण्यात्[2] विराट्पुरुषस्य मुखाद्ब्राह्मणवर्गस्य प्रथमः प्रादुर्भावोऽभवत्। एवमेव चतुर्षु पर्वसु श्रावणमासस्य श्रवणानक्षत्रयुक्तपौर्णमास्यां तिथौ श्रावणीति पर्व प्राथम्यादापतति। प्राचीनमहर्षिः धीरसमीरसुशान्तवर्षर्ताविव चातुर्मास्यव्रतंधारयन् ब्रह्मविद्यास्वरूपवेदानां स्वाध्यायं चकार। तदानीन्तना द्विजातयो ब्राह्मणक्षत्रियवैश्याः प्रायोऽस्मिन् दिवसेऽग्निहोत्रं विधाय तन्निमित्तकं नवीनयज्ञोपवीतं धारयित्वा[3] वेदाध्ययनरताश्चाभवन्। एतेन स्वाध्यायेन देवर्षयः पितरश्च संतृप्ताश्चासन्। एतदर्थमिदं पर्व ऋष्यानृण्यपर्व उपाकर्म वा कथ्यते। तदारभ्याऽस्मिन् दिवसे वेदाध्ययनस्य प्रारम्भोऽभवदिति मन्यते।

अधुनाऽपि अस्मिन् दिवसे ब्राह्मणा ब्रह्मवटवश्च-ब्रह्मवेलायामुत्थाय शौच-स्नानादि सम्पाद्य शुद्धधौतवस्त्रं परिधाय देवर्षिपूजनसामग्री-फलपुष्पधूपदीपनैवेद्यदधिदुग्धमधुशर्कराताम्बूलपूगीफलदूर्वाङ्करकुशकदलीपत्रापामार्गनारिकेलरम्भाफलामृतकर्कटिकादिऋतुफलानि, शुद्धयज्ञोपवीताक्षतयवतिलहरिद्रामलकीरससुगन्धतैलसिन्दूरयज्ञावशेषभस्मचन्दनतद्घर्षणशिलपट्टादिस्वस्वासनानि च गृहीत्वा पूर्वनिश्चिते कस्मिंश्चित्तीर्थस्थले सरोवरगङ्गोपकूले वा सर्वे चैकीभूय तेषां मध्ये परम्परागत-ब्रह्मपाठिनं विद्यावयोवृद्धाऽऽचारशीलं सुस्पष्टमन्त्रोच्चारकं विद्वांसं श्रावणीकर्मकर्तारमङ्गीकृत्य तस्यानुगमन एव नाभिदघ्नं तीर्थजलं प्रविश्य प्राङ्मुखीभूय सपवित्रदक्षिणकरगण्डूषे तीर्थजलं निधाय कृत्वामहासङ्कल्पं ततः संवत्सरा-

---

१. श्रवण नक्षत्रयुक्तपूर्णिमायां या वैदिकी क्रिया सा।

२. शुक्लयजुः पुरुषसूक्तम् ११।

३. ॐ यज्ञोपवीतं परमं पवित्रमिति मन्त्रेण।

वधि सञ्चितकल्मषं दूरीकर्तुं पञ्चगव्यं पीत्वा यथाविधि[1] समन्त्रकं गोमय गङ्गामृत्तिकादेश्चोपलेपनं कृत्वा दूर्वाङ्कुरैर्दर्भाङ्कुरैरपामार्गशाखाभिः सह क्रमशः स्नानं मार्जनं च कृत्वा तीर्थजलगर्भे चाघमर्षमन्त्रं[2] प्रपठन् तत्रैव जले निमज्ज्य त्रिवारप्राणायामान्ते चोत्थाय माध्याह्निकसन्ध्यासूर्योपस्थानादिपूर्वकं पुनस्तीर्थजले निमज्ज्योत्थायामलकीरसं सर्वाङ्गे लिप्त्वा पुनर्निमज्ज्य चोत्थाय सुगन्धिततैललेपनान्तेशुद्धस्नानदेवर्षिपितृतर्पणादिकं विधाय धौतशुद्धवस्त्रं परिधाय सुनिश्चितकाष्ठपीठे चोपविश्य सविधि ऋषिपूजनं यज्ञोपवीतपूजनं च समाप्योक्तनवीनयज्ञोपवीतं धारयित्वाप्रसादरूपेण भालपट्टेषु सुगन्धचन्दनं चर्चयित्वा सहर्षचरणामृत प्रसादञ्च गृहीत्वा चार्याय दक्षिणां सर्वे प्रददति। ततश्च ज्येष्ठश्रेष्ठादिक्रमेण परस्परं मणिबन्धेषु रक्षासूत्राणि मन्त्रेण[3] बध्नन्ति च।

गृहान् परावृत्य भोजनोपरान्ते चापराह्णे स्वस्वसुबुद्धश्रद्धालुच्छात्रान् तेषां शाखानुसारं वेदं प्रपाठयन्ति। यतोऽद्य वेदारम्भदिवसोऽपि विद्यते। छात्रा विद्यार्थिन आचार्येभ्यो वेदमन्त्रं गृहीत्वाऽहोभाग्यं चाभिमन्यन्ते।

लौकिकरीत्यापि हिन्दूनामद्य रक्षाबन्धनं महापर्व कथ्यते। एतस्मिन् विषये चैका पौराणिकी कथा प्रचलितास्ति। यदा भगवान् विष्णुर्वामनरूपेण बलिं वसुधामयाचत तदा स बलिहस्ते रक्षासूत्रं बबन्ध। एतद्धेतोरद्यापि नगरे ग्रामे हट्टके आपणे च विभिन्नप्रकारकाणां मनोमोहकानां रक्षासूत्राणां क्रयविक्रयौ संदृश्येते। विशेषतो भ्रातृभगिन्यो रक्षासूत्रं क्रीणन्त्यः प्रत्यापणं समवेताः सत्योऽपूर्वशोभां परिवर्द्धयन्ति। गृहे गृहे भगिन्यः स्वभ्रातॄन् रक्षां बद्ध्वा तेभ्यो मिष्टान्नं दक्षिणाञ्च लभन्ते। भ्रातारोऽपि भगिनीभ्यः आपद्भ्योरक्षणार्थं प्रतिश्रुतवचनानि प्रददति। भ्रातृभगिन्योः सोल्लासकमिदं पर्व भवति यतो दूरदेशगतानां भ्रातॄणां समीपेष्वपि तत्रत्यपत्रालयसङ्केतेन स्नेहपत्रेण सह रक्षासूत्राणि प्रेष्य सौहार्दिकाभिसूचनां प्रकाशयन्ति भगिन्यः। भ्रातारो दूरदेशादपि सप्रेम रक्षा सूत्राणि प्राप्य ताभ्यः सुष्ठुदक्षिणां प्रेषयन्ति। अन्यच्च अद्यत्वे विप्राः पुरोहितगणाः पुराणां हितकाम्यया नगरे ग्रामे ग्रामे प्रातर्यजमानहस्तेषु "रक्षासूत्रं येन बद्धो बली राजा दानवेन्द्रो महाबलः। तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल" इति मन्त्रं पठन्तो रक्षाबन्धनं कृत्वा तेभ्यः प्रचुरदक्षिणां गृहीत्वा तेभ्यः स्वस्तिवचांसि प्रददते।

अस्माकमिदं पर्व वैदिकधर्मसंरक्षणाय भ्रातृभगिन्योर्नैसर्गिकस्नेहसंवर्द्धनाय प्रति संवत्सरं शुभसूचनादिकं गृहीत्वाऽऽयात्विति शम्। ❋

---

१. उपाकर्मपद्धतिर्द्रष्टव्या।
२. ॐ ऋतञ्च सत्यञ्चेत्यादि (ऋग्वेद मं १० सू० १९०)
३. येन बद्धो बली राजा दानवेन्द्रो महाबलः। तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल इति मन्त्रेण।

# एकादशः किरणः

## "प्रौष्ठपदमासः (भाद्रपदमासः)"

**धन्यः प्रौष्ठपदो मासो भक्तानामिष्ट-सिद्धिदः ।**
**गोकुलानन्दचन्द्रस्तु यस्मिन्नवततार च ।।**

प्रौष्ठो गौस्तस्य इव पादाः येषां ते प्रौष्ठपादा नक्षत्रविशेषाः, तद्युक्ता पौर्णमासी "प्रौष्ठपदी" अर्थात् "भाद्रपदपूर्णिमा" सा अस्ति अस्मिन्निति प्रौष्ठपदो भाद्रपदमासः । उल्लिखितपद्यस्यायमाशयः—भक्तजनानानभीष्ट-सिद्धिदातृभाद्रपदमासो धन्यतमः । यस्मिन् मोकुलानन्दनिकेतनः श्रीकृष्णचन्द्रो धराधाम्नि अवततार ।

यद्यपि भगवान् श्रीकृष्णचन्द्रो ब्रह्मविद्यायाः योगशास्त्रस्य च आत्म-भूतायां श्रीगीतोपनिषदि विभूतियोगवर्णनप्रसङ्गेऽर्जुनं प्रति प्रतिपादितवान्--"मासानां मार्गशीर्षोऽहम्" अर्थात् द्वादशसुमासेषु अहं मार्गशीर्षोऽग्रहायण (अगहन) मासोऽस्मि, तथापि मद्बुद्धया मार्गर्षचोऽपि, अतिमहिमावान्नानन्द प्रदश्मासो भाद्रपदमास एव । एतस्यैव संक्षिप्तवर्णनमंत्र प्रस्तौमि ।

१ -- अस्मिन् धरातले भगवत अवतारात् प्राक् यदा राक्षसानां विपुलैरत्याचारैर्न केवलं मानवा अपितु देवगन्धर्वादयश्चापि भयविक्लवा ब्रह्माणमग्रेकृत्वा क्षीरनिधिमुपगम्य भगवन्तं विष्णुं विविधाभिस्तुतिभिः प्रर्थयामासुस्तदा भक्तभयहारी भक्तवत्सलो भगवान् तेषामभिलाषसंसिद्धयेऽस्मिन्नेव मासे (भाद्रपदे) कृष्णपक्षे रोहिण्यष्टम्यां निजावतारेण भुवं भूषयामास । अवतारसमकालमेव निखिलापि भूमिरानन्दाम्बुधौ निममज्ज ।

२—मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य वनवासकाले दण्डकारण्यवासि-भीरामाभिरामशोभाविमुग्धमानसैर्मुनिभिः विहाराय सोत्सुकैर्यदाऽभिलाषः प्रकटितः तदा करुणावरुणालयो भगवान् तानाश्वासयन्प्रतिश्रुतवान्—"अहं द्वापरयुगे कृष्णावतारे प्रकट्य वाञ्छापूर्ति सम्पादयिष्यामीति" । तत एवारभ्य तपश्चर्यासु कालक्षेपं विदधतस्तपोधनाः सम्प्राप्ते भाद्रपदमासे सम्पन्ने च—कृष्णावतारे गोपिकास्वरूपेण जन्मान्तरमुपगृह्य चिरायेप्सितां प्रभुसेवां सम्प्राप्तवन्तः । इयमपि लीला भाद्रपदस्य महिमानमतितमं व्यनक्ति ।

३—अस्यैव भाद्रपदस्य शुक्लपक्षीयाऽष्टमी आह्लादिनीशक्तेः जगन्मोहनकृष्णमोहिन्या वृषभानुनन्दिन्याः श्रीश्रीराधाराज्ञ्याः शुभाविर्भाव-तिथिरप्यस्ति । भगवन्तं कृष्णं सर्वान्तः करणेन सा आराधयामास इत्येव

कारणात् "राधा" इति ( राधसाध संसिद्धौ—इति धातोः स्मरणात् ) मनोरमामभिख्यामाप । भाद्रपदशुक्लाष्टमी एव श्रीराधाष्टमी (राधाजयन्ती) ब्रतं सर्वेषु व्रतेषु मौलिभूतं मन्यते—यथा हि पद्मपुराणे पातालखण्डे व्यवस्थितम्—

**एकादशीसहस्रेभ्यो यत्फलं लभते नरः ।**
**राधाजन्माष्टमीपुण्यं तस्माच्छतगुणाधिकम् ।।**

अतो राधाराज्ञ्याः शुभाविर्भावेन भाद्रपदस्य महिमाऽपूर्वः सञ्जायते ।

४—पुराणशिरोमणेः श्रीमद्भागवतस्य द्वादशे स्कन्धे वर्णनमायाति—

**प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहासनान्वितम् ।**
**ददाति यो भागवतं स याति परमां गतिम् ।।**

अस्याऽयमाशयः—भाद्रपदपूर्णिमायां यो नरो भागवतपुस्तकं सुवर्ण—सिंहासने अधिष्ठाप्य आचार्याय समर्पयति स परमां गतिमञ्जसैव लभते ।

समाधिभाषायामन्योऽप्यनुशीलनीयोऽर्थः स्फुरति—अस्यां प्रौष्ठपदी-पूर्णिमायां य आचार्यप्रवरः स्वर्णसिंहासनसदृशं निजहृदयमधिरूढां श्रीमद्-भागवतवाणीं शिष्यहृदयेऽभिनिवेशयति तदा तत्फलस्वरूपेणोभावपि सुदुर्लभां सुगतिं लभेते । अस्यामेव पूर्णिमायां महाराजं परीक्षितं श्रीमद्-भागवतस्य कथां श्रावयन्तः श्रीमच्छुकदेवपादाःसप्ताहश्रवणस्य पूर्णा-हुतिमाजुहूवुः । इममेव प्रतीकमनुश्रित्य भारतवर्षेऽद्यापि बहुषु प्रान्तेषु पुण्य-क्षेत्रेषु च जनाः "भागवतमहोत्सव" समारोहमामनन्ति ।

एकस्मिन्नेवमासे सकलावतारशेखरीभूतस्यावतारिणः श्रीकृष्ण-चन्द्रस्य तथा समस्तशक्तिसर्वश्रेष्ठाया आह्लादिनीशक्तेः श्रीराधाराज्ञ्याश्च मधुरातिमधुरदेवदुर्लभलीलानां समावेशेन अयं प्रौष्ठपदो मासो धन्यतम इति शम् ।

# द्वादशः किरणः

## "शरत्पूर्णिमा शारदीयोत्सवश्च"

वर्षानन्तरं रमणीयस्य शरत्कालस्य प्रकृतिः पवित्र-भारत-भूमौ पदं निधत्ते, इति तु सर्वविदितमेव। शब्दकौस्तुभानुसारं "शरत्" शब्दः श्वेतवाचकस्तत्पर्यायिरूपेण निर्मलत्वं चावहति। अत एव हि "शरत्पदम" प्रकीर्तनेन श्वेतकमलानां बोधो जायते। अतः शरत्पूर्णिमा निर्म्मलपूर्णिमा-रूपेणाप्यभिधातुं शक्यते।

अस्मादेव दिनादारभ्य लीलापुरुषोत्तमस्य भगवतः श्रीकृष्णचन्द्रस्य कन्दर्पदर्पदमनी भक्तविनोदिनी अचिन्त्यलीला प्रादुर्भवति। सुधीमतां पाठ-कानां सम्मुखे, एनामेवोपस्थातुमुपक्रमते।

शरत्पूर्णिमायां गगनं नितान्तं निर्मलं चकास्ति। निशायां निशाकरश्च सुधाकररूपेण विपुलानन्ददायको भवति। प्रतीकरूपेण भक्तिशास्त्राचार्यैः आह्लादिनीशक्तिमत्याः श्रीराधाराज्ञ्याः वदनसौन्दर्यवर्णनप्रसङ्गे "शरच्चन्द्रनिभानने"। इति सम्बोधनात्मकं पदं प्रयुक्तमासीत्।

शराणि ददाति या सा "शरद्" इति व्युत्पत्तिमाश्रित्य शरोत्पादकस्य (सरपत अथवा नरकुल) कालस्य या पूर्णिमा सैव "शरत्पूर्णिमा" इति सिध्यति। एतदर्थमेव देशस्य विभिन्नभूभागेषु आश्विनपूर्णिमा क्वार पूर्णिमा (कुमारी पूर्णिमा) कोजागरीति विविधाः प्रतिनिधिशब्दाः प्रयुज्यन्ते। अर्थगाम्भीर्यं शब्दान्तः सन्निविष्टम् इति बुद्ध्या आश्विनीनक्षत्रयुक्ता पूर्णिमा आश्विनी पूर्णिमाख्यायते। ज्यौतिषशास्त्रानुसारेण इयं पूर्णिमा अवश्यमेव अश्विनीनक्षत्रयुक्ता तिष्ठति।

अस्मिन् शरत्काले ये उत्सवाः सम्पाद्यन्ते ते सर्वे शारदीया उत्सवा एव। अस्मिन्नेव शरत्समये बहुषु प्रान्तेषु "क्वारी" (कुमारी) कन्यकाः व्रतमाचरन्ति। महापुराणे श्रीमद्भागवते वर्णनमायाति...... व्रजबालिकाः पतिरूपेण गोपीजनबल्लभकृष्णप्राप्तये, अस्मिन्नेव मासे योगमाया-स्वरूपिणीं "देवीं कात्यायनीमाराधयन्त्यो निम्नाङ्कितां प्रार्थनां कुर्वन्ति स्म—

**कात्यायनि महामाये ! महायोगिन्यधीश्वरि।**
**नन्दगोपसुतं देवि ! पतिं मे कुरुते नमः ॥**

इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः॥ (भा० १०/२२/४)

एवं सति, क्वारी (कुमारी) कन्याभिराराधिता मासस्य पूर्णिमा तिथिः "क्वारपूर्णिमेति" नाम्ना विख्याता।

अस्मिन्काले भारतवर्षस्य विभिन्नप्रदेशेषु जनाः विविधान् उत्सवान्

आमनन्ति । अयं देशो धर्म्मप्राण इति कृत्वा अत्रत्या उपासनापद्धतयोऽपि बहुविधाः प्रचलिताः सन्ति । तासु पञ्चविधा एव प्राधन्येनोपवर्णिताः । शाक्तानां वैष्णवानाञ्चोपासनाः प्रतियोगितारूपेण दरीदृश्यन्ते । बंगाल प्रान्ते उत्तरभारते च शाक्ताः नवरात्रसमये नवदिवसात्मिकामुपासनां प्रकुर्वन्ति । अतोऽप्यधिकं विष्णुभक्ताः वैष्णवाः मर्यादापुरुषोत्तमस्य भगवतो रामचन्द्रस्य-विजयोत्सवरूपेण विजयादशमीं यावत् निजाराध्य-लीलामनुसरन्ति । इयं लीला रामलीलेति नाम्ना गीयते ।

अस्मिन्नेव समये "कृष्णस्तु भगवान् स्वयम्" इति सिद्धान्ते निष्ठावन्त उत्कलादिप्रान्तीयाः पश्चिमभारतवासिनः मथुरामण्डलीयाः कृष्णभक्ताः, इमामेव पूर्णिमां लीलाविशेषाश्रयत्वात् श्रद्धया "रास पूर्णिमां" कथयन्ति । त्रिभुवन विमोहनेन भगवता श्रीकृष्णचन्द्रेणास्मिन्नेव दिवसे रासः प्रारब्धः ! अयं रसमयो रासोत्सवः कार्तिकपूर्णिमापर्यन्तं प्रचलति । अयमेवोत्सवः श्रीमद्भागवते रासपञ्चाध्याय्यां वर्णितो भगवतोऽचिन्त्यलीलाया अगाध-सिन्धुरस्ति । भगवतः श्रीकृष्णाचन्द्रस्य रासच्छविः (झाँकी) भक्ति-रसाचार्याणां श्रीरूपगोस्वामिपादानां परमप्रेष्ठेन श्रीमत्कृष्णादासकवि-राजगोस्वामिपादेन "श्रीगोविन्दलीलामृतग्रन्थे" अन्तरङ्गकोटीनां भक्त जनानां कृते इत्थं प्रदर्शिता—

अथ प्रबन्धगानं स नानातालैः पृथग्विधम् ।
कर्तुमारभतैताभिर्विदग्धाभिः सनर्तनम् ।

( श्री गो० ली० मृ० २३/१ )

अयमाशयः—रासपूर्णिमायां श्रीकृष्णः स्वयमागताभिः व्रजाङ्गनाभिः साकं नर्तनमाश्रित्य विविधताललय रमणीयं प्रबन्धगानं प्रवर्तितवान् ।

कृष्णः श्रीमान्मुहुरिह समागत्य तासां सहमया-
न्नानातालक्रमवशतया चालयन् श्रीपदाब्जे ।
धुन्वन् पाणी नटति निगदन्नित्थमानन्दयस्ता
स्तत्ता तत्थे दृगिति दृगित्थैदृंक् तथैदृक् तथे था ।।
थो दिक् दां दां किट किट कणकें थोक्कु थो दिक्कु आरे ।
इ द्रां झें द्रां किटि किटि किटि धा झेंक्कु झें झें क्कु झें झेम् ।।
थोदिक् दां दां दृमि दृमि दृमि धां काङ्कु झें काङ्कु झेंन्द्राम् ।
आगत्यैव नर्तात स हरिश्चारु-पाठप्रबन्धम् ।।

( श्री गो० ली० मृ० २३/६-७)

शिथिलवसनकेशाः श्वासवेल्लत्कुचाग्राः
श्रमजलयुतभालाः सालसाङ्ग्यः क्रियासु ।
क्लमजनितरुचापि प्रेष्ठनेत्रातितुष्टिं ।
पुपुषुरधिकमेता रासनृत्यावसाने ॥

( श्री गो० ली० मृ० २३/४१ )

अर्थात् रासनृत्यसमाप्तौ व्रजाङ्गनानां वसनानि केशाश्च शिथिलिताः, श्वासोच्छ्वासैः उरोजाग्रभागाः कम्पिताः कपोलेषु श्रमबिन्दवः पुलकिताः प्रत्यङ्गञ्च सालसं सञ्जातमिति तासां श्रमजनिता कान्तिः श्रीकृष्ण-नयनयोरतिशयानन्दप्रदानरता आसीत् ।

शारदीपेषूत्सवेषु मुख्यतमायाः रासपूर्णिमायाः चन्द्रकिरणोज्ज्वल-रजन्यां लीलापुरुषोत्तमस्य भगवतः श्रीकृष्णचन्द्रस्याचिन्त्यलीलायाः सागरः समुल्लसन्नासीत् । कारणञ्चास्य स्वरचितपद्ये सुस्पष्टीकृतम् ।

रासोत्सवे न परम रमणावसाने,
एकेन प्रेमहृदयं प्रकटीकरोति ।
तस्मादसंख्यशतकोटिनिजानुरूपैः—
श्यामः प्रियाभिरभिसारछलेन रेमे ॥

( स्वीयः )

अतएव हि भगवान् "कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः" कथ्यते गीयते वा । इदमेव शारदीयोत्सवस्य वास्तविकं सारभूतं तत्त्वमस्तीति निभालयन्तु प्रणयिनो भक्ताः ।



# त्रयोदशः किरणः

## परोपकारः

उपोपसर्गपूर्वककृधातोर्घञि प्रत्यये कृते उपकारशब्दस्य व्युत्पत्तिर्भवति। परेषामन्येषामुपकार इति परोपकारः कथ्यते। परन्तु तस्य परोपकारस्य भावना जडचेतनयोर्वर्तते। प्रायोऽस्मिन् संसारे पञ्चविध-चेतनाः सन्ति। ते च, आच्छादित-सङ्कुचित-मुकुलित-विकसित-पूर्णविकसितचेतनाः। आच्छादितचेतनेषु—पाषाणपादपादयः। सङ्कुचितेषु साधारणपशुपक्षिसरीसृपादयः। मुकुलितचेतनेषु गोगजाश्व-वृषभादयः, विकसितचेतनेषु साधारणमानवादयः। पूर्णविकसितचेतनेषु सविवेकसाधकेश्वरतत्त्वनिष्ठविद्वज्जनादय आयान्ति। एतेषां मध्ये अल्पाधिकरूपेण च परोपकाररूपको दिव्यगुणो दरीदृश्यते।

यथाच्छादितचेतनेषु—

**पिबन्ति नद्यः स्वयमेव नाम्भः,**
**स्वयं न खादन्ति फलानि वृक्षाः।**
**धाराधरा[1] वर्षति नात्महेतोः**
**परोपकाराय सतां विभूतयः॥**

नद्यः स्वयमेव जलं न पिबन्ति। वृक्षाः स्वयमेव फलानि न खादन्ति। जलधराः स्वतृप्त्यर्थं वारि न वर्षति। सत्पुरुषाणामैश्वर्यं परोपकाराय भवति। यथा जलं वारि फलानीति चान्येषामुपकाराय सन्ति।

मुकुलितचेतनेषु गोवृषभादयः परोपकारार्थं सर्वश्रेष्ठोदाहरणीया भवन्ति। गौःपुंमान् भवतु उताहो स्त्री भवतु वा गोशब्दो वृषभ—धेनुवाची भवति। अत्र प्रबन्धे विशेषतया स्त्रीवाचकस्य गोशब्द-स्योदाहरणं विद्यते। यां हिन्दवः स्वमातृसमां देवतामिव प्रणमन्ति-पूजयन्ति च। एवं भूतासु गोषु दुग्धदधिनवनीतादिपदार्थाः चामृतसमाः परोपकाराय निष्कसन्ति। तस्या गोमयगोमूत्रेऽप्यन्तः शुधिकरे भवतः। कृषका वृषभैः क्षेत्रकर्षणं कृत्वा तस्मिन् विविधशस्यान्युत्पादयन्ति। येन सर्वे जीवधारिणो जीवन्ति। महाभारते चोक्तम्—

**गावः श्रेष्ठाः पवित्राश्च पावन्यो जगदुत्तमाः।**
**ऋते दधिघृताभ्याञ्च नेह यज्ञः प्रवर्तते॥**

---

१. पाठान्तरः—नादन्ति शस्यं खलु वारिवाहाः॥

अपि च केनाप्युक्तम्—

**पृष्ठतः सन्तु मे गावो गावो मे सन्तु चाग्रतः ।**
**गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।।**

परोपकारार्थं यथा गावश्चोपयोगिन्यः सन्ति तथैवापरप्राणिनो नहि प्रभवन्ति ।

विकसितचेतनेषु मानवाः सर्वश्रेष्ठाः परिगणनीया भवन्ति । मानवा एव निसर्गत सामाजिकप्राणिनः सन्ति । तेषु च सामाजिकभावनारूप-परसहानुभूति-गुणानां च विकासा निहिताः सन्ति । एते एव स्वमनः सु परोपकारेण जगतः कल्याणंकर्तुमुदारभावनां ग्रहीतुं शक्नुवन्ति । परोपकारिपुरुषाः सर्वेषां जनानां हितसाधनार्थं प्रयत्नशीला भवन्ति । यदिचेत् कदाचित् स्वार्थसिद्ध्यर्थमन्ये परोपकारिपुरुषेभ्यो द्रुह्यन्ति तर्हितान् प्रति ते परोपकारिजना अहितं न कुर्वन्तिहितमेव कर्तुं चेष्टन्ते । अस्मिन् विषये साधकसिद्धानां सत्पुरुषाणामेव पूर्णविकसितचेतांसि-पूर्वं मया निगदितानि । एते महापुरुषाः संसारे सुदुर्ल्लभाः सन्ति । एतेषामुदारचरितानामियं भावना सदैव भवतीति हृदि निधाय विष्णुशर्मणापि कथितम् । यतः—

**अयं निजः परो वेति गणना लघुचेतसाम् ।**
**उदारचरितानान्तु वसुधैव कुटुम्बकम् ।।**

एते परोपकाराय स्वशरीरं पीडयन्तोऽपरेषां पीडनं दूरीकुर्वन्त, तेषां सुखसाधनानि समुत्पादयन्ति । ते जानन्ति परोपकारः पुण्याय भवति, परपीडनन्तु पापाय परिकल्पते । यदुक्तम्—

**१—अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।**
**परोपकारःपुण्याय पापाय परपीडनम् ।।**

**मनसि वचसि काये पुण्यपीयूषपूर्णा—**
**स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।**
**परगुणपरमाणून् पर्वतीकृत्य नित्यं**
**निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ।।**

---

१—ब्राह्मं पाद्मं वैष्णवञ्च शैवं लैङ्गसगारुडम् ।
नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ।
भविष्यं ब्रह्मवैवर्त्तं मार्कण्डेयं सवामनम् ।
वाराहं मात्स्यकौर्मञ्च ब्रह्माण्डाख्यमिति त्रिषट् ।।

परोपकारिमहात्मानः स्वशरीरं त्यक्त्वाऽपि चाऽन्येषां रक्षां कुर्वन्ति। एतत्प्रसङ्गे शिविशिवाजीदधीचिरन्तिदेवादयः प्रमाणीभूताःसंभवन्ति। शिविः स्वशरीरमांसं कर्तयित्वा कपोतस्य प्राणान् ररक्ष। शिवाजीमहोदयैः प्रजारञ्जनार्थमटव्यामटव्यां परिभ्रमता, दुर्दान्तऔरङ्गजेवेन सह घोरसंग्रामः कृतः। दधीचिना स्वास्थीनि दत्त्वा देवानामत्युपकारः साधितः। रन्तिदेवेन पुनः पुनः स्वभोज्यपदार्थं समर्प्यान्येषां दुःखशमनं स्वात्मने क्लेशप्रदानं कृतमिति परोपकारार्थं भूरि प्रमाणानि सन्ति। एतेषां महापुरुषाणां कायमनोवचोभिः सर्वेषां जनानां कल्याणसौख्यं कुर्वतां खल्वन्येषां स्वल्पगुणानां गौरवं प्रदर्शयतां सत्पुरुषाणांसुदुर्लभतां मन्वानेन श्रीभर्तृहरिणा कथितम्— 'परोपकाराय सतां विभूतयः' इति।

एतत्प्रसङ्गे न विस्मरेत् यदस्माकं भारतदेशम् आङ्गलशासनैराबद्धं स्वतन्त्रंकर्तुं आधुनिकमहज्जनैः कटिबद्धैः स्व० श्रीबालगङ्गाधरतिलक- महात्मगान्धि-पं०मदनमोहनमालवीयादिभिर्महोदयैः परोपकारभावनया कियन्तः क्लेशा न भुक्ताः। अपिच महामनामहोदयस्य श्रद्धेयगुरुचरणैः स्व० महामहोपाध्याय पं० आदित्यराम भट्टाचार्यैः श्री शिवशर्म संस्कृत (पाठशाला) महाविद्यालयसंस्थापनार्थं स्वकीयां सर्वसम्पत्तिं हिं- विश्वविद्यालय-वाराणसी-नाम्नि न्यासं (ट्रस्टं) कृत्वा चाहो! कियान् पकारो न कृतः, यस्यां यस्मिन् वाऽन्यप्रान्तादागत्यासंख्यच्छात्रा विद्यो- पार्जनं कृत्वा विशेषलाभान्विता भवन्ति। एते सर्वे परोपकारिणो- द्यावधि स्मरणपथं हठादारोहन्ति।



# चतुर्दशःकिरणः

## "अवन्तिका-माहात्म्यम्"

अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका ।
पुरीद्वारावती चैव सप्तैता मोक्षदायिकाः ॥
महाकालः सरिच्छिप्रा गतिश्चैव सुनिर्मला ।
उज्जयिन्यां विशालाक्षी वासः कस्मै न रोचयेत् ॥
स्नानं कृत्वा नरो यस्तु महानद्यां हि दुर्लभम् ।
महाकालं नमस्कृत्य नरो मृत्युं न शोचयेत् ॥

(स्कन्द पु० आवन्त्य मा० ३६-१७-१९)

धर्मार्थकाममोक्षरूपेषु चतुर्वर्गेषु मोक्षप्रदायिकासु सप्तपुरीषु अवन्तिकापुरी प्रसिद्धा नगर्य्यस्ति । अस्या नामकरणविषये स्कन्दपुराणस्यावन्त्यखण्डे सनत्कुमारव्याससंवादच्छलेन वर्णितमस्ति—

यत्र क्षेत्रे मृता मर्त्याः सदाचारास्तथोत्तमाः ।
विमानस्थाःपुरे नूनमैश्वरे ते वसन्ति च ॥
यत्र कीटपतङ्गाद्या मृता यान्ति परां गतिम् ।
किं तीर्थं पुण्यमन्यच्च महाकालमनादृते ॥
तस्माद् ब्रूहि ममैकन्तु प्रश्नं तथ्येन साम्प्रतम् ।
कुशस्थली कथं नाम तथावन्ती कथं स्मृता ॥
पद्मावती कथं साधो कथमुज्जयिनी तथा ।

(स्कन्द पु० ४००५)

अर्थात्—अवन्तिपुर्य्याः कुशस्थलीति, उज्जयिनीत्यपि नाम अस्ति । यस्यां कीटपतङ्गा अपि पञ्चत्वं प्राप्य परमगतिं लभन्ते । एतदुपर्य्युक्त प्रमाणितश्लोकैः व्याससनकुमारसंवादैश्च सिध्यति । पुरा ऐशानकल्पेऽवन्तिकाया आख्यानवर्णनसन्दर्भे लघुकथैका चायाति ।—देवदावानां भीषणसंग्रामानन्तरं देवा ब्रह्माणमुपजग्मुः । आगमनकारणमाकर्ण्य चतुराननः शंक्रादिदेवैः साकं श्रीशङ्करालयमुपतस्थे । ततोऽपि शङ्करसहायाः सर्वेऽपि भगवतो वासुदेवस्य दर्शनेच्छया वैकुण्ठं प्रापुः । तत्र शक्रादयो देवा भगवन्तं तुष्टुवुः ।—

नमोऽनन्ताय बृहते कूर्माय वै नमो नमः ।
नृसिंहरूपायोग्राय नमो वाराहरूपिणे ॥
राघवाय च रामाय ब्रह्मणेऽनन्तशक्तये ।
वासुदेवाय शन्ताय यदूनां पतये नमः ॥
(स्कन्द पु० ४० अ० १२-१३)

इन्द्रादिस्तुक्तिभिः प्रीतो भगवान् गगनवाचा प्रोवाच—"इति स्तवाभियुक्तानां वागुवाचाशरीरिणी" ॥

शृणुध्वं भोः सुराः सर्वे यूयं चैकाग्रमानसाः ।
महाकालवने रम्ये ब्रह्मर्षिगणसेविते ॥
तत्र पुण्या पुरी ह्येका सर्वकामफलप्रदा ।
नाम्ना कुशस्थली रम्या सिद्धगन्धर्वसेविता ॥
कल्पादौ कल्पमध्ये वा यत्र सन्निहितो हरः ।
कल्पक्षये क्षयं यान्ति स्थावराणि चराणि च ॥
तीर्थानि चैव सर्वाणि पुण्यान्यायतनानि च ।
सरितः सागराः सर्वे सरांस्युपवनानि च ॥
ओषधीवृक्षवल्ल्यश्च यन्त्रं मन्त्रं शुभाशुभम् ।
ज्योतिषां चन्द्रसूर्यौ च सर्वं विष्णुमयं जगत् ॥
तेषां वीजञ्च पुण्यञ्च जीवकर्माशयं तथा ।
सर्वमादाय भगवाञ्छङ्करस्तत्र तिष्ठति ॥
सर्वतीर्थमयी गङ्गा सर्वदेवमयो हरिः ।
सर्वयज्ञमयो वेदः सर्वधर्म्ममयी दया ॥
रेवा च सरितां श्रेष्ठा भुवि पुण्यकृताधिका ।
तस्माद्धितकरं क्षेत्रं सम्पूर्णं वै सुरोत्तमाः ॥
तस्माद्दशगुणं मन्ये प्रयागं तीर्थमुत्तमम् ।
तस्माद्दशगुणा काशी काश्या दशगुणा गया ॥
ततो दशगुणा प्रोक्ता कुशस्थली च पुण्यदा ।
उपरागसहस्राणि व्यतीपातयुतानि च ॥

अमा लक्षन्तु द्वादश्यां कलां नार्हति षोड़शीम् ।
व्यतीपाते च कोटिःस्याद्राकायां च ह्यनन्तकम् ॥
तस्माद्धितकरा देवाः पुरी ह्येषा कुशस्थली ।
अनन्तानन्तसंख्यातं दानं किञ्चित्कृतं नरैः ॥
तत्सर्वं भोःसुरश्रेष्ठाः ! सर्वं तच्चाक्षयं भवेत् ।
तस्मात्सर्वंप्रयत्नेन यूयं यात हि माचिरम् ॥
क्षीणपुण्या भवन्तो वै बाधन्ते तेन वैऽसुराः ।
महाकालवने रम्ये पुरी ह्येषा कुशस्थली ॥
तत्र गत्वा भवन्तो वै स्नानदानादिकं भुवि ।
आचरध्वं सुविधिना पुण्यात्स्वर्गमवाप्स्यथ ॥

(स्कन्द पु० ४० अ० १३-३०)

एवमाकाशवाणीमुपश्रुत्य भगवतोवासुदेवस्यानुज्ञामनुसृत्य देवाः अवन्तिपुरीं (कुशस्थलीं) प्रययुः । तद्यथा—

पुनर्जग्मुः सुराः सर्वे यत्र मालेश्वरं वनम् ।
पुरीञ्चैव द्विजश्रेष्ठ ! सर्वकामफलप्रदाम् ॥
चातुर्वर्ण्यसमाकीर्णामृषिगन्धर्वसेविताम् ।
पुण्यवद्भिर्जनैःपुण्यां सिद्धचारणसेविताम् ॥

(स्कन्द पु० ४० अ० ३२-३३)

( अवन्तिपुर्या गुणवर्णनम् )

सर्वे देवगणा महाकालेश्वरवनं पुनः प्रयाताः । यत्र ब्राह्मणक्षत्रिय-विट्शूद्राःस्वस्वधर्मपरायणा आसन् । एवं सर्वकामनाफलप्रदा, ऋषि-गन्धर्व-सेविता सुकृतिजनैः संकुला सिद्धचारणादिभिश्च पूजिता सा अवन्ती नगर्यासीत् । तथा च ।

दरिद्रो न जडो मूर्खो न रोगी न च मत्सरी ।
न व्याधितो नापवादी जनः क्वचिदपि दृश्यते ॥
दान्ताः शान्ताः सुशीलाश्च जरारोगविवर्जिताः ।
स्वधर्मनिरता नित्यं सदाचारातिथिप्रियाः ॥

नरा यत्र निवसन्ति नार्यश्चैव पतिव्रताः ।
महोत्सवः सुगीतानि हव्यं कव्यं गृहे गृहे ।।
ईदृशीं च पुरीं दृष्ट्वा देवा हर्षं परं गताः ।
तत्र तीर्थं समाख्यातं नाम पैशाचमोचनम् ।।
पुण्यवद्भिः सदा सेव्यं सर्वतीर्थनिषेवितम् ।
तस्मिन् स्नात्वाच जप्त्वा च हुत्वा दत्त्वा च देवताः ।।
पुण्यं चाथाक्षयं लब्ध्वा पुनर्याताः सुरालयम् ।
जित्वाऽसुरान् महादुष्टान् स्थानं प्राप्ताः स्वकं स्वकम् ।।
(स्कन्द पु० ४२ अ० ३५-३९ )

अर्थात्—तस्यामवन्तिकायां कुत्रापिदरिद्राः, मूर्खाः मत्सरिणः, रोगिणोऽपकारिणश्च जना नैव दृश्यन्तेस्म ! जरादिरोगशून्यैः संयतेन्द्रियैः सुशीलैः स्वधर्मनिरतैः सदाचारसुभगैरतिथिसेवाप्रवणैश्च जनैः सा नगरी शोभायमाना आसीत्। एवं तत्र नरा यथासत्यवन्तः सुकृतसंलग्नास्तथा नार्य्योऽपि सतीत्वधर्मनिरता आसन्। प्रत्यहं प्रतिगेहं देवकर्माणिपितृकर्माणि संगीतमहोत्सवाश्च सम्पाद्यन्तेस्म। तस्यां नगर्य्यां च सर्वतीर्थविख्यातं सर्वतीर्थसंसेवितं पैशाचमोचनं नाम तीर्थमासीत् । एवं विधांपावनीं पुरीं विलोक्य देवाः परमानन्दमविन्दन्। तस्मिन् तीर्थे स्नानदानजपहोमाद्यनुष्ठानानि संपूर्य देवा अक्षयपुण्यलाभप्रभावेण स्वर्गं ययुः। तत्र दुर्वृत्तानसुरान् विजित्य स्वस्वस्थानेषु पुनः समासीना विरेजिरे। तदनन्तरं सनत्कुमारो व्यासं प्रत्यवन्तिपुर्य्या महिमानं वर्णयति,—

येऽस्यां कुर्युर्महाभागाः स्नानं दानं तथार्चनम् ।
हवनं तर्पणं पितॄंस्तत्सर्वं स्याद्ध्यनन्तकम् ।।
तस्मात्सर्वप्रयत्नेन एतत्कार्यं सदा बुधैः ।
देवतीर्थौषधीबीजभूतानाञ्चैव पालनम् ।।
कल्पे कल्पे च यस्यां वै तेनावन्तिपुरी स्मृता ।
अद्यप्रभृति पुरीह्येषा नाम्नावन्ती कुशस्थली ।।
इत्युक्त्वा वै तदा देवाः स्वधाम परमं गताः ।
तदारभ्य द्विजश्रेष्ठ ! ह्यवन्ती भुवि विश्रुता ।।
(स्कन्द पु० ४२ अ० ४०-४३)

यो जनोऽवन्त्यां स्नानदानपूजनहवनादिकं देवर्षिपितृतर्पणञ्च सकृदपि करोति सोऽनन्तफलभाग् मोदते। अतो यतमानैः विद्वद्भिस्तत्र तीर्थे उषित्वा पुण्यकार्याणि सम्पादनीयानि, यदा-देवा अवन्तिपुर्यां निवसन्तः परमपुण्यप्रभावेण दुष्टान् दैत्यान् निर्जित्य स्वस्वस्थानेऽधिकारभाजो जाताः, हे द्विजश्रेष्ठ, तद्दिनादेवारभ्य अद्य यावत् कुशस्थलीति नाम्ना प्रसिद्धा अवन्तीपुरी विख्याताऽस्ति।

अवन्तिपुर्य्या अपरं नाम उज्जयिनीत्यपि चास्ति। एतत्सम्बन्धे स्कन्दपुराणे संकेतितः सन्दर्भ इत्थं वर्णितः।

एकदा त्रिपुरासुरो ब्रह्मणः सकाशाद्वरलब्धये घोरं तपश्चचार। तत्तपसा तोषितश्चतुर्मुखस्तस्मै वरं प्रादात्। तद्वरप्रभावेण त्रिपुरासुरो देवानत्यर्थं कदर्थयामास। शक्रपुरस्सरा देवा निजत्राणहेतवे—कैलाशपतिं शङ्करमुपजग्मुः। आशुतोषशङ्करोऽभयं दत्त्वावन्तिपुर्य्यां तपश्चरितुं तानादिदेश। तथा हि—

श्रूयतां भो सुरश्रेष्ठाः ब्रह्मशक्रपुरोगमाः।
जयोपायं करिष्यामि दैत्यस्यास्य दुरात्मनः॥
तपश्चरत यूयं वा आत्मनो जयकांक्षिणः।
अवन्त्यां यद्धुतं दत्तं तत्सर्वं चाक्षयं भवेत्॥

शिवाशया सुरगणा देवीं चामुण्डां समाराध्य तदनुग्रहेणाजेयानपि त्रिपुरादिदैत्यान् हेलयैव पराजितवन्तः। अवन्त्याः प्रभावेण त्रिपुरासुरोदैत्य उज्जित इति हेतोस्तस्या चोज्जयिनीति नाम प्रतिष्ठितम्।
तथा हि—

उज्जितो दानवो यस्मात् त्रैलोक्ये स्थापितं यशः।
तस्मात्सर्वैः सुरश्रेष्ठैः ऋषिभिः सनकादिभिः॥
कृतं नाम्नाह्यवन्तीं वा उज्जयिनीं पापनाशिनीम्।
अवन्ती च पुरा प्रोक्ता सर्वकामफलप्रदा॥
अद्य प्रभृति पुरीं व्यास ! उज्जयिनीं समाश्रिताः।
येऽस्यां च स्नानदानादि भुवि कुर्वन्ति मानवाः॥
न तेषां दुष्कृतं किञ्चिद् देहे तिष्ठति पापजम्।

अर्थात्—तस्मिन् उज्जयिनीक्षेत्रे ये मानवाः स्नानदानादिपुण्यकार्यं करिष्यन्ति तेषां देहे दुष्कृतादिकलमषाः स्थातुं नैव शक्ष्यन्ति ।
तथा हि—

**विद्यार्थी गिरीशं धनार्थी धनेशं सुतार्थी सुतेशं-**
**दिनेशं सुखार्थी ।**
**धियार्थी गणेशं प्रियार्थी वसेद् वै गिरां ग्राह्यमानी**
**जनश्चोज्जयिन्याम् ।।**

अस्यामवन्तिपुर्य्यां शिप्रानद्या अपि परमं माहात्म्यं स्कान्दे सुवर्णितम् । एकदा भिक्षार्थी परमशिवः वैकुण्ठगमनाय मतिमभजत् । तत्र भिक्षार्पणकाले श्री विष्णोरङ्गुल्यां शिवत्रिशूलादाघातः समजनि । तदाघात व्यतिकरेणाऽङ्गुल्याः समुत्पन्ना रुधिरधारा वेगवती बभूव । सैव धारा प्रवाहरूपमाधृत्य "शिप्रा" स्वरूपेण प्रसिद्धिमाप ।

**तदाङ्गुलिसमुद्भूतं बहु सुस्राव शोणितम् ।**
**तेनाशु पात्रं तत्पूर्णं शङ्करस्य करे स्थितम् ।।**
**सा वै धारा जाता समन्ततः ।**
**तत्रस्थाने समुद्भूता शिप्राऽसृग्धारसम्भवा ।।**
**वैकुण्ठेचाभवत्सद्यो नदी त्रैलोक्यपावनी ।**
**एवं शिप्रा सरिच्छ्रेष्ठा त्रिषु लोकेषु विश्रुता ।।**

(स्कन्द पु० ४० अ० १७-१८)

इत्थम्भूता पुरी चैतादृशी वैभवशालिनी भाग्यशालिनी चास्ति यत् द्वापरे युगे बलरामश्रीकृष्णौ चात्रैव महर्षेः सान्दीपनेराश्रमे विद्याधिगमाय समाययौ । ययोः सहान्तेवासी चातिनिर्धनोऽकिञ्चनः सुदामा नाम विप्र आसीत् । योहि गुरुपत्न्या प्रदत्तान् तण्डुलकणान् गोप्यवृत्त्या चास्वादयन्नभिशापं प्राप । ततश्च स्वगृहिण्याः प्रेरणया द्वारकाधीशं श्रीकृष्णं सन्दृश्य तत्करुणया स्वर्णाट्टालिकाविभूषितोत्तुङ्गप्रासादसंवलितं विपुलं वैभवमधिजगाम । इयमेवोज्जयिनी महाराजविक्रमस्य ललामभूता-राजधान्यासीत् । यस्या वर्णनातीतंवैभवमितिहासे प्रसिद्धम् । अस्यामेव पुर्य्यां भारतीयज्योतिःशास्त्रनिष्णातस्य प्राप्तनवनवानुसन्धानसाफल्यस्य वाराहमिहिरस्यापि वसतिरासीत् । देशान्तरस्य शून्यरेखोज्जयिन्या एव प्रारभ्यमाणा मन्यते ।

अस्यामेव पुर्य्यां कविचक्रचूडामणिः कविकुलगुरुः कालिदासो विद्योत्तमया शास्त्रार्थे पराभूतः खिद्यमानेन मनसा महाकालेश्वरवने देवीं समाराध्यासाधारणं वैदुष्यं समवाप । विद्योत्तमां तोषयितुम् "अस्ति कश्चिद् वाग्विशेषः" इति वाक्यमनुसृत्य कुमारसम्भवं, मेघदूतं, रघुवंशमिति काव्यग्रन्थरत्नत्रयं प्रणिनाय ।

सात्वतशास्त्रप्रमाणानुरोधेनेयंपुरी त्रिकालसत्यास्ति । पुरा देवासुर संग्रामसन्दर्भेण प्राप्ते सुधाकुम्भेऽमृतक्षरणाश्रयाणां चतुर्णामपि स्थानानाम् (प्रयागनासिकोज्जयिनीहरिद्वाराणाम्) अन्यतमेऽवन्तीरूपे स्थानेऽपि द्वादश वर्षानन्तरं पूर्णकुम्भस्य चायोजनं भवति । यत्र सुकृतशालिनो जना अक्षयपुण्यलाभायाञ्जसैव प्रभवन्ति । सप्तपुरीषु परिगणितत्वादितरपुरीव प्रलयकालेऽपि चावन्ती लयं नैव गच्छति "इत्यप्यस्याः पुर्य्याः समुज्ज्वलं महिमानं व्यनक्ति । अतएव धन्यतमेयं पुरी सर्वैः सर्वात्मना स्मर्त्तव्या नमस्या चेति शम् ।



# पञ्चदशः किरणः

# 'गंगा दशहरा'

पतितपावन्या गङ्गाया महिमा बेदादिशास्त्रेषु बहुशो वर्णितः। पदमपुराणे, स्कन्दपुराणे, तथा नृसिंहोपपुराणादिषु "गङ्गादशहरा" विषये विशेषेण चर्चा विहिता। ज्जेष्ठमासस्य शुक्लपक्षे दशम्यां तिथौ इदं पर्व समापतति। अस्यामेव तिथौ श्रीगङ्गादेवी कपिलशापाद् भस्मीभूतानां भगीरथवंशीयानामुद्धारायास्मिन् धरातलेऽवतीर्णा। अन्यान्ययुगेषुयथा—

कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्॥

अर्थात्—सत्ययुगे भगवतो विष्णोर्ध्यानेन, त्रेतायां यज्ञविधानेन द्वापरेप्रभुसेवया यत् फलं प्राप्यते तत् फलं कलियुगे हरेः कीर्तनादेव लभ्यते। तस्यैव श्रीकृष्णसन्दर्भे ग्रन्थे गौडीयवैष्णवाचार्यैरचिन्त्य भेदाभेदतत्त्वोद्‌बोधकैः श्री जीवगोस्वामिपादैः गङ्गाया माहात्म्यविषये निम्नाङ्कितः श्लोक उदाहरणस्वरूपेणाऽङ्कितः—

सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करे स्मृतम्।
द्वापरे तु कुरुक्षेत्रे गङ्गा कलियुगे स्मृता॥

यथा सत्ययुगे सम्पूर्णं त्रेतायां पुष्करक्षेत्रे तथा द्वापरे कुरुक्षेत्रे पुण्यमवाप्यते तथैव कलियुगे गङ्गास्नानादेव ज्ञेयम्। संसारे त्रितापतप्तानां जनानां दुःखानि दुष्कृतान्येवं सकलान्यपि कदर्थितानि श्रीगङ्गादेवी स्वपवित्रसलिलेन संप्लाव्य सततं विनाशयति। कृष्णद्वैपायनेन वेदव्यासेन गङ्गादशहराविषये प्रतिपादितम्—

गङ्गे समस्तजगदम्बचलत्तरङ्गे,
अनङ्गारिचारुतरमस्तकपुष्पमाले।
कंसारिचारुचरणद्वयरेणुहन्त्रीं,
भक्त्या नमामि दुरितक्षयकारिणीं त्वाम्॥

मातः समस्तसुखदे! प्रवरे नदीनां,
व्यासादिभिः प्रचयगीतगुणे गुणाढ्ये।
संसारभैरवमहार्णवमध्यनौके।
वन्दे तवाङ्घ्रियुगलं दुरितापहारि॥

अर्थात्—पुण्येऽस्मिन् भारतवर्षे पुण्यशालिजनानामुद्धारव्याजेन महाराजो भगीरथः स्ववंशकल्याणहेतवे घोरं तपश्चरित्वा मातरं गङ्गां सन्तोष्य पावनाऽवनावानीतवान् । यदा गङ्गायाः वेगवती धारा धरोन्मुखी जाता तदा भगवान् गङ्गाधरः स्वनाम्नः सार्थकतां सम्पादयन् स्वजटाजूटे स्थानं ददौ । उक्तञ्च—

**विष्णोः पादार्घसम्भूता शम्भोः शिरसि संस्थिता ।**
**सुमेरुश्रृंगसंस्पृष्टा हिमाचलकृताश्रया ॥**

यदि शङ्करो गङ्गां स्वमस्तके नैवाधारयत्तदा पृथ्वी रसातलं गता भवेत् । जीवमानवकल्याणाय हस्तनक्षत्रयुक्तभौमवासरे यथोक्ततिथौ सलिलरूपिणीं गङ्गां स्वमस्तके एवारोपितवान् । तत एवारभ्याशुतोषो गङ्गाधरेति नाम दधौ ।

"दशहरा" शब्दस्य शाब्दिकार्थसम्बन्धे निम्नोक्तं श्लोकद्वयं प्रमाणं—

**ज्येष्ठमासि सिते पक्षे दशमी हस्तसंयुता ।**
**हरते दशपापानि तस्माद् दशहरा स्मृता ॥**
**दशमी शुक्लपक्षे तु ज्येष्ठे मासि कुजेऽहनि ।**
**अवतीर्णा यतः स्वर्गादधस्तर्क्षे च सरिद्वरा ॥**

अनया दशपापानां हरणं भवति । एतेन द्योत्यते प्राणिषु प्राधान्येन दशविधानि पापानि तिष्ठन्ति । माता गङ्गा स्वसन्ततीनां कल्याणसम्पादनाय पापानां हरणं कृत्वा स्वपादपद्मेष्वाश्रयं प्रददाति । दशहरायाः परस्मिन् दिवसे निर्जलैकादशी समायाति । गङ्गाया महिम्नैवास्तिकजना हरिवासर तिथिव्रतमनुष्ठातुं समर्था भवन्ति । गङ्गादशहराया अनन्तरं द्वितीये दिवसे निर्जलैकादश्याः समागमनं शास्त्रीयमेकं गूढ़ं रहस्यमस्ति । विस्तारभयादत्र नैव प्रकाश्यते ।

अस्य दिवसस्यापरमेकं महत्त्वं वर्त्तते यतो भगवता रामचन्द्रेण श्रीगङ्गादशाहरायामेव श्रीरामेश्वर तीर्थेसेतुबन्धनात्पूर्वं श्रीरामेश्वर महादेवः प्रतिष्ठापूर्वकं संस्थापितः । ततोऽद्यावधि चेयं तिथिः श्रीरामेश्वर प्रतिष्ठादिवसरूपेण सनातनधर्मावलम्बिभिर्विद्वद्भिर्मन्यते ।

अस्याञ्च श्रीगङ्गास्नयिभक्ता निम्नश्लोकमुच्चारयन्तो गङ्गास्रोतसि स्नानं कुर्वन्तः प्रायो दृश्यन्ते । यथाहि—

**गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।**
**मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥**

अस्मद्भारतवर्षस्यदूरदूरतरप्रदेशेभ्यः समागता भक्तजना गङ्गायां स्नात्वा तस्याः पूजनमर्चनञ्च श्रद्धया विदधति । श्रीगङ्गादशहरायां श्रीगङ्गा-पूजनमन्त्रो यथा—

नमोभगवत्यै दशपापहरायै गङ्गायै कृष्णायै विष्णुरूपिण्यै नमो नमः । इति श्रीगङ्गादशम्थां गङ्गायाश्चापारं महिमानं ख्यापयति । पर महद्दुःखायेदं कल्पते यत्—गङ्गाया निकटवर्तिषु जनेषु तथा विधाऽऽस्था तादृशश्चार्तिभावो दृष्टिगोचरतां नैव गच्छतिः । ये भक्ताः श्रद्धाभक्तिपरेण चेतसा मातरं गङ्गां सेवन्ते ते जन्मान्तरे गङ्गासान्निध्यसौभाग्यं लभन्ते ।



# षोडशः किरणः

# श्री रामो विजयते तराम्

## "आदर्शो रामः"

**कौसल्यानन्दनं रामं जानकीवल्लभं हरिम् ।**
**वन्देऽयोध्याधिपं देवं वायुपुत्रादिसेवितम् ॥**

सौभाग्यस्यायं विषयो यदद्य श्रीरामस्य मधुरा स्मृतिः सहसा हृदये जागरिता । श्री रामस्य पावनस्मृत्या जन्म जन्मान्तरेभ्यस्त्रितापग्रस्तानां मानवानां हृदयं परमं पवित्रं सञ्जायते । श्रीरामनामोच्चारणमात्रेणैव प्राक्तनकर्मवशाद्, गुप्तसुप्तभावेन समवेता अपराधकल्मषाः सद्य एव विनश्यन्ति । कोटिकोटिकन्दर्पदलने समर्थं प्रभोः श्रीरामस्यानुपमरूपं सकृदपि यस्य नयनगोचरं भवति तस्य मानसं क्षणभङ्गुरसांसारिक-सौन्दर्यमाकर्षितुं नैव प्रभवति । प्रभोरलौकिकगुणगणसागरे सततं सिस्नासवः साधकाः कस्याप्यन्यस्यावतारस्यादर्शग्रहणाय नैव चेष्टन्ते । महान्तो योगिनो यतयो मुनयश्चापि काले काले यस्याचिन्त्यलीलया सम्मोहिताः, ब्रह्मादयोअपि देवा यामवगन्तुं नैव प्राभवन्, अनन्तदेवोऽपि निजाभिः सहस्र जिह्वाभिरपि यस्य लीलां वर्णयितुं नाशकन्, एवम्भूतो नामरूपगुणलीला विशिष्ट आदर्शपुरुषोत्तमो रामः कः ? इति प्रश्न : सहसैव सहजतया च समुदेति ।

श्रीरामनामोच्चारणेन रामस्य त्रीणि स्वरूपाणि साम्मुख्यं भजन्ते । प्रथमो बलरामो द्वितीयः परशुरामस्तृतीयश्च दाशरथी रामः । एषु त्रिषु साधक जीवानां लक्ष्यभूतः कः ? सूक्ष्मसाधकाः कमाश्रित्य निजामात्मीयतामपि विस्मरन्ति ? एषु त्रिषु को नाम निजविलक्षणतया, विचित्रतया चास्माकं हृदयं बलवदध्यास्ते ? एषु को नाम विष्णुविग्रहः ? इति समाधीयते—

संस्कृतभाषायामादिकवेर्वाल्मीकेरारभ्य महाकविं कालिदासं कविवरं भट्टिं यावत्, राष्ट्रभाषायां गोस्वामितुलसीदासादारभ्य मैथिलीशरणगुप्तरामचरितोपाध्यायपर्यन्तं सर्वेऽपि कवयो दाशरथेः रामस्यैव गुणान् गायन्तो धन्यतामुपजग्मुः । एतेन ज्ञायते यत् बलरामतः परशुरामतोऽप्यधिको भक्तानां कृते प्रभावशालिभक्तवत्सलतादिगुणः कौसल्यानन्दो राम एव सिध्यति । रघुकुलमणिं राममाश्रित्य रामायणभट्टिरघुवंशादीनि ग्रन्थरत्नानि प्रणीतानि तथा बलरामं परशुरामं वाऽधिकृत्य ग्रन्थाः कथङ्कार

नैव विरचिताः ? एषु प्रश्नवाचकविषयेषूहापोहात्मक-विचारेणाऽयं निष्कर्षः समुदेति—

भगवतो लक्ष्मणाग्रजस्य लीलाः, अचिन्त्या मनसामगोचराश्च । आर्तत्राणपरो रामोऽचिन्त्यशक्तिशालितया संरक्षकरूपेण भक्तानां तथा च मर्यादापुरुषोत्तमरूपेण सामाजिकानां सम्मुखे समुदेति । रघुनाथस्यातीन्द्रिय चरित्रं प्रपत्तिरहिता मानवाः साधारणमायामोहितधिया कथमवगन्तुं क्षमा भवेयुः ? अतो भगवतो लीलाविषये विविधान् भ्रमात्मक भावान् समारोप्य तस्याः गूढ़रहस्यैर्वास्तविकतथ्यैश्च अनभिज्ञा एव तिष्ठन्ति ।

**पुराणेषु भगवतश्चतुर्विंशत्यवताराः समुपलभ्यन्ते । ते चावताराः षट्सु भागेषु विभक्ताः सन्ति ।**

१. पुरुषावतारः २. लीलावतारः ३. गुणावतारः ४. मन्वन्तरावतारः ५. युगावतारः ६. शक्त्यावेशावतारश्चेति । संक्षेपतोदाशरथीरामो गुणावताररूपेण युगावताररूपेण लीलावताररूपेण परिगृह्यते । इति भक्तिपक्षीयदृष्ट्या दशरथात्मजो राम एवादर्शरामरूपेण सर्वत्र सर्वसम्मत्या स्वीकृतः ।

---

# सप्तदशः किरणः

## स्वदेशप्रेम

अस्मिन् संसारे सर्वे प्राणिनः परस्परं प्रेमपाशे बद्धाः सन्ति। यदि चेत् कस्यचित् कं प्रति स्नेहः शून्यो भवति तर्हि समाजे सः कठोरो भवति। सभ्यसमाजस्यऽधिकांशजनास्तमनादरदृष्ट्या पश्यन्तस्तस्य स्नेह शून्यकठोरतायाः समालोचनां कुर्वन्ति। जन्मप्रसङ्गेन पितरौ पुत्रान् कन्याः प्रति वा यादृशीं प्रीतिं प्रदर्शयतस्तादृशीं प्रीतिं पूज्यबुद्ध्या तयोरुपरि पुत्रकन्ये कुरुतः। मित्रं मित्राणि प्रति भ्राता भ्रातरम्प्रति कुटुम्बिजनाः कुटुम्बान् प्रति स्वाभाविकं स्नेहप्रदर्शनं कर्त्तुमिच्छन्ति।

एकस्मिन् नगरे ग्रामे वाऽवस्थित व्यक्तीनां मध्ये यद्वत्परस्परं नैसर्गिकः स्नेहो भवति तद्वत् स्वदेशे संवर्ध्य एतादृशः कोऽस्ति यः स्वदेशम्प्रति प्रेम न स्थापयिष्यति ?

यावद्वसुधैव कुटुम्बकमिति विचारो नाभविष्यत्तावत्स्वदेशप्रेमवीजं वप्तुं नाशक्ष्यत्।

मानवैः सर्वस्मिन् स्थले व्यापारे वा मानवान् प्रति स्वात्मीयता कर्त्तव्या। अन्यथा किमङ्गीकृत्य स्वदेशीयाः सम्भविष्यन्ति ? कस्मिंश्चिद्गृहे पालितः श्वा चापरालये न तिष्ठति। एकस्मिस्तु पिञ्जरे वर्द्धिता शारिकाऽन्यस्मिन् पिञ्जरे स्थातुं नेच्छति, कारणश्चात्र तयोस्तत्तत्स्थानयोरात्मीयतैव।

यदि साधारणपशुपक्षिणौ स्वस्थानं प्रत्युपर्युक्तं प्रेमजातं त्यक्तुं नेच्छतस्तदा मनुष्याणांः जीवनस्य सर्वसाधनस्वदेशविषये कथं प्रेम न भवेत् ? यदि चेत्कस्यचित् स्वदेशम्प्रति प्रेम नोपजायेत तर्हि तस्य हृदयं राष्ट्रकवि मैथिलीशरण गुप्तस्य शब्दे इत्थं वर्णनीयम्—

**भरा नहीं जो भावों से, बहती जिसमें रस धार नहीं।**
**वह हृदय नहीं है पत्थर है, जिसमें स्वदेश का प्यार नहीं॥**

संस्कृतच्छायम्—

**भावैर्नपूर्णं हृदयं सुक्षेत्रम्**
**स्वदेश रागाभिनिवेशशून्यम्।**
**प्रीतेरसो न स्रवते यतो हि,**
**दृषत्तदास्ते हृदयं तु नैव॥**

इदञ्च स्वदेशप्रेमामृतपुटं पीत्वा महाराज्ञी लक्ष्मीबाई किं प्रमत्ता नाभूत् ? सत्यवीराङ्गणाया वीरतां किं सा न प्रदर्शितवती ? स्वदेशप्रेम-व्यसन एवं प्रमत्तीभूय स्वशरीरं तत्याज। तस्या वीरताया गाथा अद्यावधि भावुकजनैर्गीयते च—

**वह रानी थी या दुर्गा थी वह स्वयं वीरता की अवतार।**
**देख मराठे पुलकित होते उसके तलवारों के वार ॥**

संस्कृतच्छाया—

**सा राज्ञी चासीदम्बिकासीद्वा,**
**वीराङ्गणायाः किल चावतारः ॥**
**दृष्ट्वा च तस्याः करवालचालनम्।**
**महाराष्ट्रपुंसोऽभवन् रोमहर्षाः ॥**

प्राचीनकालादेव स्वदेशप्रेमिणो जनाः, अस्य भारतस्य विभिन्नस्थानेषु जन्म लभमानाः आगच्छन्ति। आधुनिककाले चोत्तरप्रदेशे पं० मदन मोहन मालवीयः, जवाहर लाल नेहरूः, आजाद चन्द्रशेखरः, राममनोहर लोहिया, इत्यादयः, पञ्जाबे भगतसिंहो लाला लाजपतराय इत्यादयः बङ्गे सुभाषचन्द्र बोसः खुदिराम बोसः प्रफुल्ल चन्द्रो विधानचन्द्रराय इत्यादयः। विहारे डा० राजेन्द्रप्रसादो, लोकनायक जयप्रकाश नारायण जगजीवन रामादयः, उत्कले चोत्कलमणिर्गोपबन्धुदासः पं० विश्वनाथ दासः नित्यानंद कानूनगोः नवकृष्ण चौधुरी डा० हरेकृष्ण मेहतावः पं० नील कंठरथः रघुमहान्ति बिजू पट्टनायकः खुरजादलवेहेरादयः महाराष्ट्रे बालगङ्गाधर-तिलकः, गुजराते मुरारजीदेसाई, सरदारभाई पटेलः, महात्मागाँधी इत्यादि शतशोभहाभागाः अपरे चाऽसंख्यदेशभक्ता अस्माकं भारतदेशं स्वतन्त्रं कर्त्तुमाङ्गल शासककारागारेषु या दुर्यातना अन्वभवन् तद्वर्णनमितिहासेषु अङ्कितमस्ति। एतानि सर्वाणि स्वदेशप्रेम्णो माहात्म्यानि सन्ति।

यदि चेन्महात्मगान्धिनोऽत्युत्कटं स्वदेशप्रेम न जातमभूत् तर्हीदानीं भारतं न स्वातन्त्र्यमनुभवद् भवेत्। इमं विवेकं देशप्रेमिजनाः कर्त्तुं शक्नुवन्ति। स्वदेशप्रेमतरङ्गेषु तरङ्गिता जनाः भारतमातरं सुखयितुं समर्था एव। तस्मात्सा दूरादेव हस्तौ प्रसार्याऽऽकृष्य चाऽस्मान् स्वाङ्के स्थापयिष्यति।

तदा वयं मातुः पवित्राङ्कस्थानं प्राप्य तस्याः स्नेहवशादपरान् देशद्रोहि मन्दमनुष्यान् भारतमातरम्प्रत्यश्रद्धजनांश्च दूरीकरर्तुं समर्था भविष्यामः।

अपि च तदा वयं भारतमातुः सुपुत्राः स्वदेशभक्ताअपि आह्वयिष्यामहे।

युक्तमिदं शास्त्रवचनम्—

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी"

अपरश्च—

गायन्ति देवाः किलगीतकानि,
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदहेतुभूते ॥
भवन्ति भूयः पुरुषाः सुरत्वात् ॥



# अष्टादशः किरणः

## प्रभात-वर्णनम्

रात्र्यन्ते चारुणोदयानन्तरं प्रातः कालस्यागमनं भवति। अस्मि काले पूर्वस्यां दिशि भगवान् भास्कर उदेति। तस्मिन् समये गोलाकारे रक्तपिण्डवत्तद्रूपं दृष्ट्वा प्रायो बालका आमोदन्ते। आकाशो रजनीरू कृष्णाम्बरं परित्यज्य प्रभातरूपं शुक्लाच्छादनं धारयति। कुक्कुटा पक्षिणस्तदैव सुस्वरेण कूजन्ति, भ्रमराः पुष्परसाहरणार्थं तेषामुपरि गुञ्जन्ति च। विहङ्गमाः नीडं विहाय खाद्याऽऽहरणार्थं वृक्षादपरपादपान श्रयन्तिइतस्ततः परिभ्रमन्तः पङ्क्तिबद्धा गगनमार्गे उड्डयनं कुर्वन्ति तेषांध्वनिं श्रुत्वा उत्थाय जना स्वेषु स्वेषु कार्येषु संलग्ना भवन्ति। कृषक क्षेत्रकर्षणाय बलीवर्दकैः सह क्षेत्राभिमुखंगत्वा क्षेत्रकर्षणं कुर्वन्ति च विप्रा विप्रवटवश्च नद्यां तडागे वा स्नानादिकं कार्यं कृत्वा देवींगायत्री माराधयन्ति।

**नत्वाथ पुण्डरीकाक्षमुपात्ताघप्रशान्तये।**
**ब्रह्मवर्चसकामार्थं प्रातः सन्ध्यामुपास्महे इति॥**

कथयन्नित्यकर्मणि संलग्ना भवन्ति। एतत्समये कमलानि विकसन्ति कुमुदानि संकुचन्ति च। चक्रवाका मोदन्ते, उलूकाः खिद्यन्ते च। तपस्वि भिश्च तपश्चर्या क्रियते, भवति चारुणोदयानन्तरं प्रातः कालस्तत्र दे पूजकाः स्वेष्टदेवानां जागरणाय मृदङ्गकम्ब्वादिवाद्यानि वादयन्ति तस्कराः प्रातः कालं ज्ञात्वा भीताः सन्तः पलायित्वा स्वरूपं परिवर्तयन्ति अस्मिन् समये स्वास्थ्यलाभाय स्वास्थ्येच्छुका मित्रैः सह पारस्परि वार्तालापनिमग्ना इतस्ततो विचरन्तः स्वच्छसमीरणं सेवमाना दृश्यन्ते च।

केचिच्च—

**विहाय निद्रामरुणोदये च, विधाय कृत्यानि च विप्रमुख्याः**
**वेदावसाने प्रपठन्ति नित्यं गोविन्द दामोदर माधवेति।**

प्रातरुत्थाय व्रजबालकाः श्रीकृष्णमित्थं सम्बोधयामासुः—

यथाहि—

**प्रभातकाले वरबल्लबौघा**
**गोरक्षणार्थं धृतवेत्रदण्डाः।**

आकारयामासुरनन्तमाद्यं
गोविन्द दामोदर माधवेति ॥

प्रभातकाले धार्मिकजनाः प्रायः निम्नश्लोकान् पठन्तः श्रूयन्तेऽस्माभिः ।

ब्रह्मा मुरारिस्त्रिपुरान्तकारी
भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥

प्रातः काले जागरणं विधेयमिति प्रसङ्गे कविकुलगुरुणा कालिदासेन रघुवंशमहाकाव्ये प्रतिपादितम् —

रात्रिर्गता मतिमतां वर मुञ्च शय्यां
धात्रा द्विधैव ननु धुर्यगतौ विभक्ता ।
तामेकतस्तव बिभर्त्ति गुर्रुविनिद्र--
स्तस्या भवानपरधुर्यपदावलम्बी ॥

---

# एकोनविंशतितमः किरणः

# धैर्यधना हि साधवः

प्रायोऽस्मिञ्जगति सर्वे मानवा हितैषिणो वित्तैषिणः पुत्रैषिण इत्यादयो भवन्ति। आजन्म-मरणावधि जना वस्त्वेकमेकम्प्रति अभिलाष कुर्वते। तत्पूरणे बहवः क्लेशास्तैर्भुज्यन्ते। समयानुसारं दुःसहकष्टानले पतित्वा स्वात्मधैर्यमपि जहति साधूनान्तु न धैर्यं प्रणश्यति।

साध्नोति परेषां कार्याणीति साधुस्ते साधवः। अत्र साध्नोति परम मिति साधुः इत्यपि व्युत्पत्तिरस्ति। तर्हि सर्वस्मात्परमः ईश्वरः। यथा हि—

**ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः।**

**अनादिरादिर्गोविन्दः सर्वकारणकारणम्॥**[1]

साधव ईश्वरीयकार्याणि साधयितुं कदापि धैर्यं न जहति तद्व वद्धारणं कुर्वन्ति च। प्रश्नोऽयम् तर्हि धैर्यधना हि साधव इति वाक्येऽनीश्व रीयकार्येषु तत्साधने वा साधवो धैर्यधनं त्यजन्ति किम्? नहि कदापि नहि साधवः समदर्शिनो भवन्ति। तस्मादीश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति (२) इति गीतोपनिषद्वचनं स्वीकृत्यैव सर्वेषु प्राणिषु ईश्वरबुद्ध्या तत्त त्कार्येषु धैर्यधनं धारयन्ति। प्रमाणतया साधूत्तमैर्हनुमद्भिर्भगवद्रामचन्द्रस्य कार्ये दुस्तरसिन्धुलङ्घने धैर्यं न जहे। साधूत्तमेन देवर्षिनारदेन देवराजेन्द्रस्य वार्तां गृहीत्वा स्वर्गाद्द्वारकाभिगमने धैर्यं न त्यक्तम्। साधुसत्तमेन गृध्रराज जटायुषा श्रीमज्जगज्जनन्या जानक्या अपहरणं दृष्ट्वा पौलस्त्येन सार्धं समरकरणे धैर्यं नात्याजि। पुराणेषु धैर्यधनानां शिबिदधीचिबलिरन्ति देवादीनां कथा सुप्रसिद्धैव।

तत्परकालेऽपि स्वस्वमतस्थापनेऽपरमतस्य खण्डनेऽहिंसा धर्म्मोपदेशको भगवान् बुद्धदेवः, केवलाद्वैतवादिश्रीमच्छङ्कराचार्यः, विशिष्टाद्वैतवादि श्रीमद्रामानुजाचार्यः शुद्धद्वैतवादिश्रीमन्मध्वाचार्यः, शुद्धाद्वैतवादिश्री निम्बार्काचार्यः द्वैताद्वैतवादिश्रीविष्णुस्वामी तथाऽचिन्त्यभेदाभेदवाद स्थापने श्रीमच्चैतन्यमतावलम्बिश्रीमद्बलदेवविद्याभूषणादयो विविध दार्शनिकाःसर्वे धैर्यधनं न तत्यजुः।

अर्वाचीनकाले तु श्रीमन्महात्मा गान्धिर्युधिष्ठिरवत्सहनशीलतयै

---

(१) ब्र० सं० ५/१। (२)—

शतसहस्रविदेशीयानाङ्ग्लजातीयान् शस्त्रास्त्रैर्विना भारतवर्षाद्दूरीकरणे समर्थोऽभूत् । तत्कारणमेकं धैर्यधनधारणम् । युक्तमुक्तं विष्णुशर्मणा—

**विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।**
**यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ।।**

साम्प्रतिकअयोध्यायां श्रीमद्रामजन्मभूमौ तन्मन्दिरनिर्माणे भारतीय सर्वकारेण दमननीत्या विघ्नविडम्बना समुपस्थापिता । जगद्गुरुभिः श्रीमच्छङ्कराचार्यचरणैः श्रीस्वरूपानन्दवासुदेवानन्दादिभिर्महात्मभिः श्रीशदीक्षिताद्यपरसन्तसमुदायैः सह रामैकप्राणाशोकसिंघलादिभक्तहिन्दू-समुदायानैकीकृत्य तुमुलजयघोषेण स्वलक्ष्यं प्राप्तुं समर्थः भविष्यते इति नात्र संशयः ।

———

# विंशतितमः किरणः

## सन्ध्यादिग्ददर्शनम्

सम्यक् ध्यायति यस्मिन् काले इति विग्रहे समुपसर्गपूर्वकाद् ध्यैचिन्तायमिति धातोः सन्ध्याशब्दस्य सिद्धिर्भवति। सं सम्यक् ध्यायत्यस्यामिति वा सन्ध्या[1]। असारे खलु संसारे प्रत्यहः प्रातः मध्याह्नः सायमिति त्रिकालानामागमनम्भवति। तेषु च सन्ध्येति दिवारात्र्योर्मध्यभागः कथ्यते।

[2]**अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः।**
**सा च सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः॥**

अपराह्णोपरान्तमादित्येऽस्तङ्गते सन्ध्याराशी पश्चिमाशास्वर्णशाटीं परिधायावन्यां पदार्पणं करोति। तस्मिन्नेव समये शनैः शनैराकाशमालोकं परिहृत्यान्धकारमाच्छादयति। तस्मिन्काले विहङ्गमा आहारं संगृह्य गगनमार्गे उड्डीयनं कृत्वा सकलरवैः स्वनीडमाश्रयन्ति। आदिवसं कार्यसंलग्ना जनाः कार्याणि समाप्य स्वानि गृहाणि प्रत्यावर्तन्ते। तदवसरे विप्राविप्रवटवश्चाऽध्ययनाऽध्यापनं समाप्य देवीं सरस्वतीमाराधयन्ति।

उक्तञ्च—

**गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने।**
**सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता॥**

एतस्मिन् समये भावुका भगवद्भक्ताः सान्ध्याह्निककृत्येषु तत्परा भवन्ति। मृदङ्गवाद्यैः सह घण्टाध्वनिपूर्वकं स्वेष्टदेवानां नीराजनं कुर्वन्तो विविधतालबन्धैर्गायन्ति नृत्यन्ति च। अस्मिन् काले धार्मिकश्रद्धालुकुलाङ्गना आत्मनः पतिपुत्रकल्याणार्थं कुलप्रथानुसारेण गृहदेवतागारेषु गोशालासु तुलसीमञ्चसामीप्येषु च धूपप्रदीपानर्पयन्ती शङ्खं धमन्ति च।

सन्ध्यापूर्वादिवाऽस्माकं गुरुवर्गा अस्माकं विद्यालयेऽवकाशं कृत्वा सायंकालीनाध्ययनेऽस्मभ्यं सहयोगं प्रयच्छन्ति। कालस्य तिस्रोभार्याः सन्ति, याभिर्विना ब्रह्माऽपि सन्ध्यां कर्त्तुं न शक्नोति।

---

१. यद्वा सन्दधातीति सं+धा अघ्न्यादयश्च उणा—४।११२ इति यक् प्रत्ययेन निपातितः कालविशेषः।

२. वाराहे॥

[1]कालस्य तिस्रो भार्याश्च सन्ध्यारात्रिदिनानि च ।
याभिर्विना विधात्रा च सन्ध्या कर्त्तुं न शक्यते ॥

एतत्कालमुद्दिश्य कविकुलगुरुभिः श्रीमद्भिः कालिदासैः रघुवंश-महाकाव्येकथितम् ।

[2]सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्तेनिलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभापतङ्गस्य मुनेश्च धेनुः ॥

सायंकाले किसलयवद्रक्तवर्णा सूर्यस्य प्रभा वसिष्ठस्य धेनुर्नन्दिनी च दिशामवकाशान् परिभ्रमणेन पवित्रान् कृत्वैवोभेऽपि क्रमशोऽस्ताचलाय, आश्रमाय च गन्तुं प्रवृत्ते ।

अपरञ्च —

[3]पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥

राज्ञाऽग्रेकृता नन्दिनी दिलीपपत्नी सुदक्षिणा च प्रत्युद्गता तयोर्मध्ये दिलीपो दिवसः सुदक्षिणा क्षपा चोभयोर्दिनक्षपयोरभ्यन्तरे सा धेनुः सन्ध्येव शुशुभे ।

---

१. ब्रह्मवैवर्तीय प्रकृतिखण्डे । २. रघुवं० म० का० २।१५ । ३. रघुवं० म० का० २।२० ॥

# एकविंशतितमः किरणः

## कण्टकेनैव कण्टकम्

कण्टकेन एव कण्टकमर्थात् 'यो यथा वर्तते तेन तथा वर्तितव्य' इति नीतिः। अन्यथाऽभीष्टसाधने साफल्यं नहि मिलिष्यति। उपर्युक्त वचनं सत्यमेव प्रतीयते। यथाहि भगवता श्रीरामचन्द्रेण मर्यादापुरुषोत्तमे रावणविभीषणयोर्विषये पृथक् पृथक् व्यवहारः कृतः। श्रूयते चास्माभि कनिष्ठयविभीषणाय सच्छत्रचामरराजसिंहासनमर्पितं तथा ज्येष्ठभ्रात रावणः समूलो विनष्टीकृतः। तद्वत् भगवता श्रीकृष्णचन्द्रेण लीलापुरुषोत्तमे कंसोग्रसेनयोर्विषयेऽपि तथैवाचरणं प्रदर्शितम्। उग्रसेनाय राजसिंहास कंसाय तु मृत्युदण्डः प्रदत्तः। सर्वस्वामिमानिनां कौरवाणां कृते वंशनाशनमित्यादि बिभिन्ना व्यवहाराः सन्ति। यादृशी भावना यस् सिद्धिर्भवति तादृशीति न्यायेन कण्टकसमव्यक्तिं प्रति तत्स्वरूपतीक्ष्ण स्वभावधारणमेव बुद्धिमतां परिचायकः। परदाराभिलाषिणः कुटिल रावणस्यकृते धनुर्धारिणः पुरुषोत्तरामस्य असरलमूर्तिरेव प्रमाणम् नीतिरस्ति—'शठे शाठ्यं समाचरेत्', 'कण्टकेनैव कण्टकमिति वा।

केनाप्युक्तम् अक्रोधेन जयेत् क्रोधम् असाधुं साधुना जयेत्। इति सर्वस्मिन् स्थाने काले पात्रे वा न प्रयुञ्जीत, प्रमाणतया—

**यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥**

(गीता)

विचार्यतां भगवन्तौ श्रीरामकृष्णौ रावणकंसदुर्योधनादीन् प्रति क्षमावृत्तिं धारयितुं न शेकतुः, परं 'कण्टकेनैव कण्टकम्' इत्येवाचेरतुः।

अधुना तु भारतदेशे निवसद्भिः कतिपयै भारतराष्ट्रविरोधि भिर्हिंसापरककापट्यकण्टकाकीर्णविविधमार्गाणि निर्दशितानि। सत्संस्कार विशिष्टा वयं विरोधितत्त्वं सोमसमर्था अपि बलाद्वोढुं बाध्याः स्म। अतएव 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह मिति भगवद्गिरा' व्यवहर्तव्यम्॥

———

# द्वाविंशतितमः किरणः

# 'महाभारते महामतिविदुरः'

महाकविवेदव्यासमतानुसारं भौगोलिकदृष्ट्या उत्तर-दिशि हिमालयस्तथा दक्षिणदिशि भारतमहासागरः। अनयोर्मध्यवर्त्तिस्थलं सुप्रतिष्ठितं भारतवर्षं वर्त्तते। वैक्रमनवत्यधिकपञ्चसहस्रवर्षेभ्यः पूर्वमस्य भूभागस्य भरतवंशीयैः राजभिरनुशासितत्वादस्य-भारतवर्षनाम्ना सुप्रसिद्धिरस्ति। भारतवर्षस्येमां भौगोलिकसत्तामवलम्ब्य यस्मिन् विराट् राष्ट्रियैकतायाः सुप्रतिष्ठा बभूव तन्नाम महाभारतमस्ति।

अनेन महाभारतेनैव भारतवर्षस्य सभ्यतयाः संस्कृतेश्च सर्वश्रेष्ठ-परिचयः प्राप्यते। इदं चतुर्वेदानन्तरं पञ्चमवेदोऽस्ति। उक्तञ्च— "इतिहासः पुराणञ्च पञ्चमो वेद उच्यते"। अस्मिंश्च धर्म्मार्थ काममोक्षाणां मानवजीवनस्य चतुर्वर्गसाधनघटनानां साङ्गोपाङ्गवर्णनानि सन्ति। इयदेव नास्ति, मानवजीवनस्यागन्तुकपरम्पराणां हृदयङ्गम घटनानाञ्च द्योतनमप्यस्ति। अतो वेदव्यासेन स्पष्टमुक्तम्—यच्चेहास्ति तदन्यत्र, यन्नेहास्ति न तत्क्वचित्। अर्थात् महाभारते ग्रन्थे यानि विषय-वस्तूनि न वर्णितानि सन्ति तान्यन्यत्र कुत्रापि न सन्ति। नैमिषारण्ये तपोनिष्ठैः शौनकादिभिः ऋषिभिः पृष्टस्य श्रीमतः सूतस्य कथनमिदमासीद्यत् महा-कवेर्वेदव्यासस्य मनोरूपसमुद्रमन्थनेन महाभारतं नाम विचित्ररत्न संभारमस्माभिः प्राप्तम्। अस्य रत्नसमूहस्य मध्ये महामतिविदुरस्योदात्त चरितं महाकवेरनुपमा सृष्टिरस्ति। महाभारतस्य पृष्ठभूमौ महामति-विदुरः धर्मस्य विग्रहः प्रज्ञाया मूर्त्तिमान् परिग्रहश्चास्ति। अयं भारत वर्षस्य प्रदीप्तवाण्यां मूर्त्तिमतो विवेकस्य प्रतीकस्वरूपः। महाभारतस्यानु-क्रमणिकायां श्रीमान् वेदव्यासः उदात्तचरित्रवर्णने महामतिं विदुरं धर्मशीलां गान्धारीञ्च केन्द्रविन्दुरूपेण संस्थापितवान्। कुरुपतेः धृतराष्ट्रस्य विदुरं प्रति पुनः पुनः कथनस्यायमुल्लेखोवर्तते यद्—हे विदुर ! राजर्षिवंशे त्वमेको विचक्षणः प्राज्ञश्च। सूक्ष्मधर्मस्त्वय्येव विद्यमानः। अतोऽस्मान् सुपन्थानं त्वमेव निर्दिश।

महाभारतस्यादिपर्वण्ययमुल्लेखो दृश्यते यद् धर्म एव महामति विदुररूपेण शूद्रयोन्यामजनिष्ट। लोकशिक्षार्थं विश्वस्मिन् मानवदेहं धृत्वा स्वीयाचरणैरियं शिक्षा प्रदत्ता यन्मानवश्चरमप्रतिकूलावस्थामध्ये स्थित्वाऽपि कथं स्वधर्माचरणे निरतो भवितुमर्हति।

अधुनायं प्रश्न उतिष्ठते यद् धर्मो विदुररूपेण शूद्रयोन्यां कथङ्कार-मजनिष्ट ? अस्मिन्सन्दर्भे ग्रन्थाकर-महाभारतद्वारैवेवं परिज्ञानं भवति यत्—तपस्विना माण्डवऋषिणा धर्मायायं शापो दत्तः—हे धर्म ! यत्त्वं पृथिव्यां मानवानां कृते सुखदुःखयोराशाकाङ्क्षयोरुत्थानपतनयोश्चोत्तम दृष्टिं न स्थापयन् उदासीनस्तिष्ठसि । अत एतत्फलस्वरूपं ते मनुष्ययोन्यां शूद्रगृहे च जन्मग्रहणमवश्यम्भविता यतोहि धर्मस्य केवलमूर्ध्वलोके चाकाशे निरालम्बभावेन स्थित्वा पृथिव्या मानवानां सम्बन्धे निरपेक्षेण अवस्थानं नोचित्तम् । अतो महामतिविदुरेण हीनजातिमाश्रित्य शूद्रजन्म लब्ध्वा जन-कल्याणार्थमुदात्तचरितं प्रदर्शितम् । शुद्रकुलोत्पन्नः सन्नपि विदुरो नास्ति साधारणो मानवः । स तु महर्षेर्वेदव्यासस्य यौगिकरससन्तानोऽस्ति । जन्म मौहूर्त्तिककाले पितुरियमाशीस्तस्मायासीत् यद्-विदुरेण जनकल्याणार्थं पृथिव्यां पदार्पणं कृतम् । यो धर्मात्मा मनुष्येषु बुद्धिश्रेष्ठोऽलोकसामान्य प्रतिभासम्पन्नश्च भविष्यतीति । जनकल्याणार्थं निरपेक्षभावेन स्थित्वा सर्वेभ्योजनेभ्यः सदुपदेशवितरणे एवञ्च सर्वजनहितसाधने च यस्यैकमात्रं व्रतधारणं भविष्यतीति ।

विदुरोलौकिकार्थनिमित्ताय धर्मपरायणो नासीत् । धर्मस्य व्यापकार्थ-स्तस्यमानसपटलममुद्रयत् । धर्मजीवनं जीवन्धर्मार्थयोश्च कुशलो लोभक्रोध विर्वजितो दीर्घदर्शी शान्तिपरायणस्तथा सर्वेषां प्राणिनां हितेषु तत्परशील आसीत् ।

परिणतवयस्यपि सः कुरुराजवंशस्य :सुप्रसिद्धमन्त्रिपदं स्वीचकार । वेतनभोगिभृत्यः सन्नपि स्वाधीनभावेन सुस्पष्टभाषायां न्यायोचितं स्वाभिमतं प्रकट यन् विन्दुमात्रमपि कुण्ठाबोधं न करोति स्म । यदा दुर्योधनस्य कैतवपूर्णपरामर्शेन पाण्डवानां जतुगृहयात्राकरणमापतितं तदा विदुरेण "स्पष्टवक्ता न वञ्चकः" इति न्यायेन तत्षड्यन्त्राणां विरोधः कृतः तथा तत्कुत्सितकर्मणे राज्ञो धृतराष्ट्रस्यापि निन्दा विहिता । स्वबुद्धिबलप्रभावेण जतुगृहयातनाभ्यः कुन्त्या सह पाण्डवानां सुरक्षां प्रदाय तानग्निदाहात्पूर्णरूपेण ररक्ष ।

यदा पाञ्चालराजधान्याम् अर्जुनो लक्ष्यं भित्त्वा स्वयंवरसदसि द्रौपदीमवाप तदा श्रीकृष्णबलरामाभ्यां पाण्डवानां अभिनन्दनवार्तां श्रुत्वा धृतराष्ट्रोऽपरैर्मन्त्रिभिः सह मन्त्रणां प्रारेभे । तदानीं निर्भीको भूत्वा विदुरो व्याहरत्—"हे महाराज ! बन्धूनां कुशलवार्ताकथनमुचितं स्याद् यदि भवान् श्रोतुमिच्छेत् । अन्यथा हितवचनमपि निष्फलं भविष्यति ।"

यथा दुर्योधनो भवतां पुत्रस्तथैव पाण्डवा अपि भवतां पुत्राःसन्ति। साम्प्रतं प्रीतिपूर्वकं पाण्डवैः सह व्यवह्रियतामन्यथा दुर्योधनस्यापराधेन समग्रं राष्ट्रं विध्वस्तं भविष्यति।

महाराजयुधिष्ठिरस्य राजसूययज्ञस्य सम्पूर्णाऽऽयव्ययोर्भारो महामतेर्विदुरस्योपरि निहित आसीत्। तस्य विपुलैश्वर्यं प्रेक्ष्य दुर्योधनः ईर्ष्यया द्यूतक्रीडायाः प्रस्तावं पारितवान्। कैतवाक्षक्रीडायां महाराज युधिष्ठिरेण सर्वैर्भ्रातृभिः सह महाराज्ञी द्रौपद्यपि पणे स्थापिता। राज्य-सम्पत्तिः सम्पूर्णा हारिता। तदा महामतिना विदुरेण दुर्योधनं त्यक्तुं धृतराष्ट्राय प्रेरणा दत्ता स्पष्टभाषायामुक्तञ्च—हे महाराज!

**त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।**
**ग्रामं जनपदस्यार्थे धर्मार्थे पृथिवीं त्यजेत्॥**

अर्थात् कुलरक्षणार्थमेकं मानवं, ग्रामरक्षणार्थं कुलं, जनपदरक्षणार्थं ग्रामं, परन्तु धर्मरक्षणार्थं समग्रपृथिवीमपि त्यक्तुमुचितम्।

दुःशासनस्य दुर्दान्तव्यवहारेण राजसभायां द्रौपद्याः प्रश्नस्योत्तरं न प्राप्य महामतिना विदुरेण राजसभामध्ये यद् वचनं निर्भीकं पूर्णरोषेण प्रकटितम् तन्महाभारतस्य पृष्ठोपरि स्वर्णाङ्कितमस्ति। विदुरः सच्चरित्र-स्याक्षुण्णनिधिरस्ति। चरित्रसम्बन्धि विदुरस्याभिमतं यद्—

**वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च।**
**अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः॥**

अर्थात्-मानवेन स्वचरित्रं यत्नपूर्वकं संरक्षणीयम्। धनानि तु आयान्ति यान्ति च। धनेन क्षीणो मानवः अक्षीणो भवति, परं चरित्रेण क्षीणमानवः मृततुल्यो भवतीति।

सम्पूर्णमहाभारते विदुरेण कल्याणस्य मार्गः प्रदर्शितः। राजसभायां धृतराष्ट्रेण निष्काशितेन तेनाम्लानवदनेन कुरुपाण्डवानां हितसाधने तत्परशीलेन स्थीयते स्म। अतः सः कुरुवंशीयमन्त्री भूत्वाऽपि पाण्डवानां श्रीकृष्णस्यापि अशेषश्रद्धाभाजनमासीत्।

अनेन प्रकारेण महामति-विदुरस्य नीतिपूर्णोदात्तचरितानि महाभारते ओतप्रोतानि सन्ति। यस्मिन् राष्ट्रे नीचकुलोत्पन्नेन महामति विदुरेण तुल्याः सदोत्साहसाहसबुद्धिवैभवशालिनोऽमात्याः तिष्ठन्ति तद् राष्ट्रं सुनिश्चयमेव युधिष्ठिरराज्येन समामुत्तरोत्तरां समुन्नतिं प्राप्नोति। हन्त! साम्प्रतमस्माकं भारतदेशेन महाभारतस्योदात्तचरितस्य संस्कृति-र्विस्मृता। अतो महामतेर्विदुरस्य नीतिरनुसर्तव्या।



## त्रयोविंशतितमः किरणः

# सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति

सूक्तिरियं भवभूतिविरचितोत्तररामचरितनाटकादुद्धृतास्ति। सतां सज्जनपुरुषाणां सद्भिः सज्जनपुरुषैः सह सङ्गः सम्पर्कः संसर्गः सम्मिलनं हि निश्चयेन कथमपि कृच्छ्रेण पुण्येन सुकृतेन बहुभाग्येन च सम्भवतीत्याशयः। सङ्गस्तु द्विविधो भवति। सत्सङ्गः उताहोऽसत्सङ्गः। अनयोर्मध्ये कः सन् को वाऽसन् इति सदसतोर्विचारः प्राथमिकभूमिकायां बाह्यदशायां वेषभूषायाञ्च ज्ञातुमशक्यो भवति। कतिपयकाले व्यतीते सङ्गप्रभावेणैवान्तरिकदृष्ट्या तयोर्विचारो व्यावहारिकरूपेण परिस्फुटो जायते। सत्पुरुषाणा व्यवहारोऽसत्पुरुषाणां व्यवहारश्च स्वल्पकालेनैव तारतम्यं भजते। तदनुसारं सङ्गग्रहणस्य सङ्गत्यागस्य च परिकल्पनाऽवश्यं भविष्यति। येन सङ्गप्रभावेण मानवानामभ्युदयो भवति चानभ्युदयो नश्यति तत्सङ्गः सत्सङ्गः कथ्यते। येन सम्पर्केण सङ्गप्रभावेण च मनुष्यणामहित-मनभ्युदयश्च सङ्घटेते तत्सङ्गोऽसत्सङ्गो वर्तते। इमं सङ्गं कुसङ्गं कथयन्ति। पं० श्रीरामचन्द्रशुक्लेनोक्तम् "कुसङ्गस्य ज्वरः प्रबलो भवति" येन ज्वरेण मानवः सदैव परिपीडितः तप्तीभूतश्च सञ्जायते। तस्मादेतादृक् सङ्गः संसर्गः सम्पर्को वां दूरादेव परिहर्तव्यः। तथा चोक्तं नीतिशास्त्रे—

**दुर्जनेन समं बैरं प्रीतिञ्चापि न कारयेत्।**
**उष्णो दहति चाङ्गारः शीतः कृष्णायते करम्॥**

दुर्जनः तप्ताङ्गारसमो भवतिः तप्तावस्थायाम् अग्निस्पर्शःकरं दहति शीतलावस्थायां कृष्णाङ्गारस्पर्शः करे कालिमां लिम्पति। पुनश्च—

**दुर्जनः परिहर्तव्यो विद्ययालङ्कृतोऽपि सन्।**
**मणिना भूषितः सर्पः किमसौ न भयङ्करः॥**

विद्यया विभूषितोऽपि दुर्भाग्यवशाद् यदि सः दुर्जनो भवति तस्मिन्वा दुर्जनता परिलक्ष्यते तर्हि स त्याज्य एव। अत्र दृष्टान्तः—यथैवोरगशिरसि मणयो विलसन्ति किं तान् मणीन् धारयित्वा स भयङ्करो न वर्तते? वर्तते एव। अतोऽसत्सङ्गः परिहर्तव्यः सत्सङ्गो ग्रहीतव्यः।

अधिकारभेदेन शास्त्रदृष्ट्या सत्पुरुषस्त्रिविधो भवति। यथाहि--सन्, सत्तरः, सत्तम इति। एते सङ्गयोग्या दर्शनयोग्याश्च भवन्ति। सत्पुरुषेष्वपि साधुत्वप्रभावेणाधिकारप्रभावेण च कनिष्ठाधिकारी साधकः सद्रूपेण, मध्यमाधिकारी साधकः सत्तररूपेण, उत्तमाधिकारी साधकः सत्तमरूपेण गृह्यन्ते। साधारणमानवापेक्षया सत्पुरुषः श्रेष्ठः सत्पुरुषापेक्षया सत्तरः पुरुषः श्रेष्ठस्तदपेक्षया सत्तमः पुरुषः श्रेष्ठो भवति।

सत्पुरुषस्य लक्षणम्—

**अर्चायामेव हरये पूजां यः श्रद्धयेहते।[1]**
**न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः॥**

(भा० ११/२/४५)

अत्र भक्तार्थे साधकः। यः साधकः श्रद्धापूर्वकार्चाविग्रहे प्रतिमायां भगवद्बुद्ध्या पूजयति परन्तु भगवतोऽन्येषु भक्तेषु न, कामपि श्रद्धामभिनन्दनञ्च करोति। अथवा यमहंपूजयामि तस्याऽयं प्रियजन इति बुद्ध्या कामपि सद्भावनां प्रकटयितुं न शक्नोति सः साधकः पूजकः प्राकृतः प्रारम्भको भक्तः सत्पर्यायो भवति। भक्तिसाधनप्रभावेण क्रमशोऽयं सत्तमो भविष्यतीति ज्ञेयः।

---

१—एवत्प्रसङ्गे श्रीमज्जीवगोस्वामिचरणैः स्वकृतक्रमसन्दर्भटीकायां स्पष्टीकृतम्—अथ भगवद्धर्माचरणरूपेण कायिकेन किञ्चिन्मानसेन च लिङ्गेन कनिष्ठं लक्षयति। अर्चायामिति। अर्चायां प्रतिमायामेव न तद्भक्तेषु।

अन्येषु सुतरां न। भगवत्प्रेमाभावात् भक्तमाहात्म्यज्ञानाभावात् सर्वादरालक्षणभक्तगुणानुदयाच्च स प्राकृतः प्रकृतिप्रारम्भः। अधुनैव प्रारब्ध भक्तिरित्यर्थः। इयञ्च श्रद्धा न शास्त्रार्थावधारणाजाता। यस्यात्मबुद्धिः कुणप इत्यादि शास्त्राज्ञानात्। तस्मल्लोक परम्पराप्राप्तैवेति पूर्ववत्। अतश्चाजातप्रेमा शास्त्रीयश्रद्धायुक्तः साधकस्तु मुख्यः कनिष्ठो ज्ञेयः॥ भा० ११/२/४५॥

अस्मिन् विषये श्रीमद्विश्वनाथचक्रवर्तिचरणैः कृतायां सारार्थदर्शिन्यां टीकायामपि—अच्चर्यां प्रतिमायां हरये हरिं प्रीणयितुं न तद्भक्तेष्वपि अन्येषु च सुतरां, प्राकृतः प्रकृतिप्रारम्भः अधुनैव प्रारब्धभक्तिः। शनैरुत्तमा भविष्यतीत्यर्थ इति भा० ११/२/४५।

सत्तरपुरुषस्य लक्षणम्—

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु वा ।१
प्रेममैत्री कृपोपेक्षां यः करोति समध्यमः ।।

(भा० ११/२/४४)

यः साधकः ईश्वरे परमेश्वरे प्रेम अर्थादान्तरिकभक्तिभावना, ईश्वराधीन भक्तजनेषु आन्तरिकमित्रता, बालिशेष्वज्ञजनेषु कृपाकारुण्य भावना तथा श्रीहरिविद्वेषजनेषु तद्विमुखजनेषु चोपेक्षा औदासीन्यं चेति प्रदर्शयति, स साधकश्चतुर्षु भेददर्शननिमित्तेषु मध्यमाधिकारी सत्तरःपर्यायो भवति ।

---

१—एतत्प्रसङ्गे श्रीमज्जीवगोस्वामिचरणैः स्वकृतक्रमसन्दर्भे चोल्लेखितम् अथ मानसलिङ्गविशेषणमेव मध्यमभागवतं लक्षयति । ईश्वर इति—परमेश्वरे प्रेम करोति तस्मिन् भक्तियुतो भवतीत्यर्थः । तथा तदधीनेषु भक्तेषु च मैत्रीं बन्धुभावम् । बालिशेषु तद्भक्तिमजानत्सु उदासीनेषु कृपां यथोक्तं श्रीप्रह्लादेन । शोचे ततो विमुखचेतस इन्द्रियार्थमाया-सुखायभरमुद्वहतो विमूढानिति । आत्मन द्विषत्सु उपेक्षां तदीय द्वेषेण चिन्ता क्षोभेणौदासीन्यमित्यर्थः । तेष्वपि बालिशत्वेन कृपांश सद्भावात् । यथैव श्रीप्रह्लादो हिरण्यकशिपौ भगवतो भागवतस्य वा द्विषति सत्यपि चित्तक्षोभे तत्रानभिविवेशमित्यर्थः । अस्य बालिशेषु कृपाया एव स्फुरणम् । द्विषत्सूपेक्षाया एव । न तु प्राग्वत् सर्वत्र तस्य तत्प्रेम्णो वा स्फुरणं ततो मध्यमत्वम् । भा० ११/२/४४ ।

अस्मिन् विषये श्रीमद्विश्वनाथचक्रवर्तिचरणैः स्वकृत सारार्थदर्शिन्या-मुक्तम् ईश्वरे स्वोपास्ये भगवति प्रेम करोति—

तस्मिन्नासक्तो भवतीत्यर्थः । तदधीनेषु स अधीनो येषां तेषु वा तस्य अधीनाः तेषु भक्तेषु मैत्रीं बन्धुभावम् । बालिशेषु तद्भक्तिमजानत्सु कृपामिति भरतव्यासशुकादीनामपि कृपायाः सार्वत्रिकत्वादर्शनात् येषु बालिशेषु कृपा स्वयमुदेति तेष्विति व्याख्येयम् । गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवमिति गिरिदृष्टान्तात् । भगवन्तं द्विषत्सु उपेक्षां तत्र कृपाया वैफल्यदर्शनादिति भावः । आत्मानं द्विषत्सु तु बालिशत्वमननात् दूरतः स्थित्वैव तच्छुभानुध्यानमात्रमिति सदाचारः । अत्र सर्वभूतेषु भगवद्दर्शन-योग्यता यस्य कदाचिदपि न दृष्टा तस्यैवैतल्लक्षणचतुष्टयत्वे मध्यमत्वम् यस्य तु सा दृष्टा तस्य तूत्तमत्वमेवेति विवेचनीयम् । अतएव भागवतोत्तमेषु नारदादिष्वपि प्रेममैत्रीकृपोपेक्षा दृश्यन्ते एव । भा० ११।२।४४ ।।

सत्तमपुरुषस्य लक्षणम्

सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः[1]।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥

(भा० ११।२।४३)

यो जीवन्मुक्तः साधकसिद्धः स्थावरजङ्गमादिषु अर्थादाच्छा[2]दितादिपञ्चचेतनेषु आत्मनः स्वस्योपास्यदेवस्य विद्यमानताद्यस्तित्वभावमवलोकयेत् तथा च तस्मिन् परब्रह्मणि भगवत्यधिष्ठाने स्थावरजङ्गमादिचराचरप्राणिमात्राणामर्थादाच्छादितादिपञ्चचेतनानां स्थायित्वभावमनुभवेत् स एव सत्तमपुरुषो महाभागवतोत्तम उत्तमाधिकारी भवति ।

---

१. अस्मिन्विषये श्रीमज्जीवगोस्वामिचरणैः स्वकृतक्रमसन्दर्भे स्पष्टीकृतम् । तत्रोत्तरं तदनुभवद्वारागम्येन मानसलिङ्गेन महाभागतं लक्षयति सर्वभूतेष्विति । एवं वृतः स्वप्रियनामकीर्त्या जातानुराग इति श्रीकविवाक्योक्तरीत्या यश्चित्तद्रवहासरोदनाद्यनुभावकानुरागवशात् एवं वायुमग्निमित्यादि तदुक्तप्रकारेणैव चेतनाचेतनेषु सर्वभूतेषु आत्मनो भगवद्भावं आत्माभीष्टो यो भगवदाविर्भावस्तमेवेत्यर्थः । पश्येत् अनुभवति । अतस्तानि च भूतानि आत्मनि स्वचित्ते तथा स्फुरति यो भगवान् तस्मिन्नेव तदाश्रितत्वेनैवानुभवति । एष भागवोत्तमो भवति । "अंतः परं क्रमसन्दर्भो द्रष्टव्यः पठनीयश्च" ।

११।२।४३

२. एतेषु तात्पर्येषु त्रयोदशः किरणो द्रष्टव्यः ।

एतत्प्रसङ्गे श्रीमद्विश्वनाथचक्रवर्तिचरणैरपि स्वसारार्थदर्शिन्यामुक्तम्—आत्मनः स्वस्य उपास्यो यो भगवांस्तस्य भावं विद्यमानतां सर्वभूतेषु यः पश्येत् यथा स क्व इति हिरण्यकशिपुना पृष्टः प्रह्लादः सर्वत्रैवेत्युक्त्वा स्तम्भेऽपि मत्प्रभुर्दृश्यत इति स्वोपास्यं भगवन्तं दृष्टवानेवेत्यर्थः । तथा आत्मन्यात्मीये आत्मोपास्य भगवति च भूतानि पश्येत् यथा श्रीयशोदा कृष्णस्य जठर एव सर्वभूतान्यपश्यत् । यद्वा आत्मनि स्वमनसि स्फुरति यो भगवांस्तस्मिन्नेव भूतानि । तद्विषकप्रेमवन्ति यः पश्येत् यथा वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्या इति अतः परं सारार्थदर्शिनी द्रष्टव्या भा० ११।२।४३

एतेषां सङ्गयोग्यानां सत्पुरुषाणां सम्पर्केण मानवमात्राणामाध्यात्मिकं स्वाभीष्टं श्रेयस्करश्चाभ्युदयं भवति। यतो ह्येते भगवधिष्ठानं बुद्ध्या केषामपि प्राणिनामपकारभावनां स्वचित्तेषु नावधारयन्ति। ये सत्पुरुषास्तेऽयाचकभावेन गृहिणां गृहं गत्वा तेषां सुखदुःखेषु भागं विभज्य चान्तरिकभावेन सहायतामपि कुर्वन्ति। सत्सङ्गतिः पुसां मानवानां किं किं करोतीति प्रश्ने श्रीमता राज्ञा भर्तृहरिणा चोत्तरितम्। सत्सङ्गतिबुद्ध्या जडतामपहरति। वाण्यां सत्यतामानयन्त्यभिसिञ्चति मानवेभ्यो मर्यादायाः सम्मानस्याभीष्टवृद्धिं प्रददाति करोति वा कल्मषं पापं दूरादप्यपसारयति। चेतसमभिप्रसन्नतामानयति। चतुर्दिक्षु च कीर्तिं यशो विस्तारयति। तस्मात् कथय, सत्सङ्गतिरूपनिधिर्मानवानां किं किं न करोति। अर्थात्सर्वकार्याणि साधनानि च साधयति। यथाहि—

**जाड्यं धियो हरति सिञ्चति वाचि सत्यं,**
**मानोन्नतिं दिशति पापमपाकरोति।**
**चेतः प्रसादयति दिक्षु तनोति कीर्तिं,**
**सत्सङ्गतिः कथय किं न करोति पुंसाम्॥**

स्वनीतिशास्त्रे भर्तृहरिणा सत्सङ्गत्य यथोचितं षड्विधं फलं प्रदर्शितं परमिदंफलं भौतिकं वाह्याकारेण जागतिकं गौण फलमात्रं भवति।

**सत्संगत्या मुख्यफलम्**

आन्तरिकदशायां सत्सङ्गत्या मुख्यफलविषये भगवता कपिलदेवेन स्वमातृदेवहूतिं प्रति ऊचे।

**[1]सतां प्रसङ्गान्ममवीर्यसंविदो, भवन्ति हृत्कर्णरसायनाः कथाः।**
**तज्जोषणादाश्वपवर्गवर्त्मनि, श्रद्धारतिर्भक्तिरनुक्रमिष्यति॥**

(भा० ३।२५।२५)

---

१. एतत्प्रसङ्गे श्रीमद्विश्वनाथचक्रवर्तिचरणैः सारार्थदर्शिन्यामुक्तम्—साधुसङ्गत एव भगवति मनोरतिं वहतीत्यत्र क्रममाह—सतामिति सङ्गः प्रार्थ्य इति पूर्वोक्तेः प्रथमं श्रद्धा ततः सतां प्रकृष्टात्सङ्गान्मम कथा भवन्तीत्यादावप्रकृष्टसङ्गाद्भजनक्रियामात्रं न तु कथाः। ततः प्रकृष्टात्सङ्गादनर्थनिवर्त्तिकाः कथा भवन्ति ततस्ता एव कथा निष्ठामत्पादयन्त्यो मम वीर्यस्य मन्माहात्म्यस्य संवित् सम्यग्वेदनं यतस्तथा भूता भवन्ति ततो रुचिमुत्पादयन्त्यो हृत्कर्णरसायना भवन्ति। ततस्तासां कथानां जोषणात्प्रीत्या आस्वादनाद् अपवर्गोवर्त्मन्येव यस्य तस्मिन् भगवति श्रद्धा निष्ठा व आसक्तिः रतिर्भावभक्तिः प्रेमा अनुक्रमिष्यति अनुक्रमेण भविष्यति। भा० ३।२५।२५

मातः ! सत्पुरुषाणां प्रकृष्टसंसर्गातिसम्पर्कादेव मद्वीर्यप्रकाशिकाः मन्निष्ठात्मिकाः समालोचिताः संलापकथाः समुपस्थिता भवन्ति। ताश्च हृत्कर्णाभ्यां सुखदायिकाः सन्ति। सुतरां तत्सेवनाच्छीघ्रं मयि अर्थादपवर्गवर्त्मस्वरूपे भगवति प्राक् श्रद्धा ततोभक्तिस्ततो रतिः प्रेमाचेत्यनुक्रमेण भविष्यति।

**सत्समागमस्य समयः निर्धारणीयः**

शास्त्रेषु सत्समागमस्य समुपलब्धः समयो निर्द्धारणीयोऽस्ति सत्समागमः कदा भविष्यतीत्यस्मिन् विषयेइक्ष्वाकुवंशावतंसेन राज्ञा मुचुकुन्देन भगवत्स्तुत्या व्याजह्रे।

**भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः।**
**सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते रतिः[1]॥**

(भा० १०/५१/३५)

हे अच्युत, भवतामनुग्रहे परमकरुणायां यदा यस्मिन् काले जनस्य मानवस्य संसारचक्रे परिभ्रमतोऽपवर्गोऽन्तोऽर्थात्संसारान्तोभवेत् तस्मिन् काले सत्समागमः सत्पुरुषैः सह समागमः समुपलभ्येत यर्हि सत्समागमस्य समुपलब्धिस्तर्ह्येव सर्वसङ्गनिवृत्तित्वात्कार्यकारणनियन्त्रिकायां सङ्गतौ सत्पुरुषाणांपरमगतौ पराणामवराणाञ्च ईशे ईश्वरे त्वयि रतिः पाठभेदे च मतिर्जायते। शास्त्रेचोक्तं सत्सङ्गत्या एव भगवच्चरणेरत्यङ्कुररूपामतिः साक्षाद्भगवत्प्राप्ति घटयिष्यतीति मुख्यफलमिदम्।

---

१ –एतत्सङ्गं श्रीमत्सनातनगोस्वामिचरणैः स्वकृतवैष्णवतोषण्यां स्पष्टीकृतम् यथा तर्हि कदाभद्रं स्वयात्तत्राह भवेति यदा भवेत् सर्वज्ञैः सम्भावितो भवति तर्हि सत्सङ्गमोऽपि विवेकिभिः सम्भाव्यत इत्यर्थः। यद्वातिशयोक्तिनाम्नोऽलङ्कारस्य चतुर्थोऽयं भेदः। यथोक्तं तद्विवृतौ। चतुर्थी सा कारणस्य गदितुं शीघ्रकामिताम्। याहिकार्यस्य पूर्वोक्तिरिति। तस्माद्यर्हि भवापवर्गः ,शीघ्रमेव भवेदित्यर्थः। यत सत्सङ्गम इत्यादि यतस्त्वयि मतौ च जातायां भवापवर्गस्याप्यव्यभिचारः स्यादित्याह एवकारान्नान्यदा कदापीत्यर्थः। अच्युतेति सम्बोध्य तत्र त्वमच्युतो भवसीति भावः। ननु मत्कृपां विना सत्सङ्गमोऽपि न स्यादिति सैवास्त्वादिकारणं तत्राह सन्त एव गतिराश्रयो यस्य तस्मिन्। अहं भक्तपराधीन इति सदिच्छयैव तत्रसर्वं प्रवर्त्तते ननु स्वतः अतः सापि तदनुगतैवेति भावः। सताङ्गतावित्यस्मिन्नर्थेऽपि—असताङ्गतिर्न प्रार्थितः प्रचुरं पूर्वं त्वयाहमिति भगवदुक्तरीत्या ययासौ भवापवर्गदाता त्वं लब्ध इति भावः। मतिरिति रतिरिति च पाठः समर्थ एव सत्सङ्गमेन रत्यङ्कुररूपैव मतिर्जायत इति। भा० १०/५१/३५॥

अतः परं सदसतोर्विवेचनानन्तरमानुकूल्यं च स सङ्कल्पः प्रातिकू
विवर्जनमिति न्यायेन सत्सङ्गस्वरूपमानुकूल्यंग्रहणं, तथाऽसत्सङ्ग स्व
प्रातिकूल्यंबर्जनीयमिति वचनं बलाद्धृदयस्पर्शि भवति। यथा सत्सङ्गस्
महिम्नो विषयेऽयम्—

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः॥
(भा० ४/३०/३४

इति प्रचेतस उक्त्या,—हे भगवन्! वयं भवदीयसङ्गिनां सङ्गस्
लवमात्रेणापि स्वर्गमोक्षयोरपि तुलनां कुर्महे। यतो मानवानामप
प्रार्थनीयं वैभवमवशिष्टं नास्ति। अर्थात्स्वर्गमोक्षाभ्यामपि भावत्क
सङ्गिनां सङ्गः श्रेष्ठतमः श्रेयस्करो वर्तते इति सत्सङ्गस्य महिमावर्णितस्तथ
च सर्वापेक्षाऽसत्सङ्गः कापिल्यसंवादेन "न तथा च भवेन्मोहः" भा
३१/३/३५ इति श्लोकस्य तात्पर्येणाऽतिशयं हृदयं कम्पते। येन च,—

सत्यं शौचं दया मौनं बुद्धिर्ह्रीः श्रीर्यशः क्षमा।
शमोदमो भगश्चेति यत्सङ्गाद्याति संक्षयम्॥

कपिलेनोक्तम्—
(भा० ३/३१/३

हे जननि! असत्सङ्गोऽतिशयमनिष्टकरो भवति। यस्मात्स
शौचादिकमपरं दशविधं कर्म विनश्यति। एतस्मात्प्रातिकूल्यस्वरूप
सत्सङ्गं त्यक्त्वा आनुकूल्यसङ्कल्परूपेण सत्सङ्गो ग्रहणीयो वरणीयः करणी
यथा हि—भगवता व्यासेन भागवते भगवदुक्त्येदं सिद्धान्तितम्।

ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान्।
सन्त एवास्य छिन्दन्ति मनो व्यासङ्गमुक्तिभिः[१]॥
(भा० ११/२६/२

शास्त्रादेशोऽयं यद्विवेकिना स्वान्तः करणैर्दुःसङ्गमसत्स
त्यक्त्वा सत्सङ्गेष्वासक्तो न भवेत। यतो हि सत्पुरुषाणां सदुपदेशेन
मनसोपस्थिताः, असद्वृत्तयोऽसदासक्तिश्च समूलं विनश्यन्ति, नान्यथ
एतद्धेतोः कथितं—सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवतीति।

---

१—एतत्प्रसङ्गे श्रीमज्जीवगोस्वामिचरणैरुक्तम्—असत्सङ्गत्यागेना
न किञ्चित्स्यात्। किन्तु सत्सङ्गेनैवेत्याह। तत इति। क्रमसन्दर्भ
श्रीमद्विश्वनाथचक्रवर्त्याचार्यचरणैरपिस्वकृतसारार्थदर्शिन्यामुलि
खितम्—"व्यासङ्गं विरुद्धामासक्तिं सन्त एवेत्येवकारेण सु
तीर्थदेवशास्त्राशानादीनां न तादृशं सामर्थ्यमिति ज्ञापितम्।"

## चतुर्विंशतितमः किरणः

# विद्यायाः स्थानं तन्महत्त्वञ्च

विदन्त्यनयेति विद्या विद्यतेऽसाविति विद्या, वेत्त्यनया सा चेतिविद्या-शब्दस्य बह्व्यो व्युत्पत्तयः सन्ति । मुख्यतया विद्धातोर्ज्ञानार्थकत्वादनेन विद्याशब्दस्य[1] सिद्धिर्जायते । विद्यायाः स्थानमष्टादशधा वर्त्तते यथा हि—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणञ्च विद्याह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थञ्च विद्याह्यष्टादशैव ताः ॥

एतास्वङ्गानि षट् कथितानि तानि च वेदाङ्गानि विद्यन्ते । यथा हि—

शिक्षा,कल्पो व्याकरणं निरुक्तं छन्दसां चितिः ।
ज्योतिषामयनञ्चैव वेदाङ्गानि वदन्ति षट् ॥

ऋग्यजुःसामाथर्वभेदेन वेदाश्चत्वारो भवन्ति । पूर्वोत्तरभेदेन मीमांसा द्विविधा । पूर्वोत्तरविभागेन न्यायदर्शनञ्च द्विविधम् । अनयोस्तु भगवता महर्षिगौतमेन पूर्वोभागः प्रणीतः, उत्तरभागस्तु भगवता महर्षि कणादेन प्रतिपादितश्च । अग्रेगत्वैतच्छास्त्रं प्राच्यनव्येति नामभ्यां प्रसिद्धि-गतम् । शासनात् त्रायते इति शास्त्रंधर्म्माय धर्मस्य वा यच्छास्त्रं तदेव धर्मशास्त्रमिति कथ्यते । मन्वादिप्रणीतं स्मृतिशास्त्रं धर्मसंहिता चेति बहुविधं दृश्यते । एतच्छास्त्रस्य प्रणेतॄणां सम्बन्धे योगियाज्ञवल्क्यमतानुसारं मनुरत्रिर्विष्णुर्हारीतो याज्ञवल्क्योशनोऽङ्गिरायमआपस्तम्वाः सम्वर्तः बृहस्पतिः—पराशरो व्यासो दक्षोगौतमः शातातपो वशिष्ठश्चैतेषां प्रणीत शास्त्राणि धर्मशास्त्ररूपेण गृह्यन्ते ।

पुराणानि तु ब्रह्मब्रह्माण्डब्रह्मवैवर्तवामनविष्णुपद्माग्निस्कन्दमत्स्य-कूर्मवाराहनारदीयशिवलिङ्गगरुड़मार्कण्डेयभागवतभविष्यादीनि त्रिषट्-संख्यकानि कृष्णद्वैपायनवेदव्यास - प्रणीतानि । धन्वन्तरिप्रणीता-युर्वेदश्चरकसुश्रुतभावप्रकाशमाधवनिदानाख्यः पादचतुष्टया-त्मकोविश्वामित्रप्रणीतो धनुर्वेदः । गन्धर्वसम्बन्धि गान्धर्व

---

१. सञ्ज्ञायां समजेति सूत्रेण विद्धातोः क्यपि टापि च कृते विद्याशब्दस्य सिद्धिरिति ।

वेदः "सारेगमपधनीसेति" गानविद्या, नृत्यमधिकृत्य वाद्यवि
प्रचलिता ॥ कौटिल्यप्रतिपादितमर्थशास्त्रमित्यष्टादश विद्याः प्रसिद्धाः ।

नीतिकारानुसारेण विद्यासु यशः प्राप्त्यर्थं शस्त्रशास्त्रभेदेन द्वे
विद्ये भवतः । एतयोर्मध्ये शस्त्रविद्या वार्द्धक्ये उपहासाय भवति परं शास्त्र
विद्या तु सर्वस्मिन् काले चाद्रियते । कस्यचिच्छास्त्रकारस्य मतानुसारं
विद्या-चतुर्विधा मन्यते, यथा हि—

"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती" अपरं
परा चापरा चेति भेदाभ्यां विद्या द्विविधा स्वीकृता । मनुनाऽपि परा वि
यथार्थतया सत्यज्ञानं पञ्चमी चात्मविद्यारूपेण गृह्यते । वस्तुतस्तु ज्ञान
वृद्धिर्विद्ययैव भवति ।

अस्मिन् संसारे खल्वेव बहूनि धनानि सन्ति परन्तु सर्वेषु ध
विद्याधनमेव सर्वश्रेष्ठधनं कथ्यते । मानवा अनया विद्ययैव सदसद्विचार
कर्तव्याकर्तव्यकर्मणश्च विवेचनां कर्तुं शक्नुवन्ति । विद्वज्जनेषु विद्या
भारकारि नैव भवति । तेभ्यः तत् चौरेण नापह्रियते । भ्रात्राऽपि चैतद्धनं
विभाज्यते । अन्यधनस्य व्यवहारेण व्ययो भवति, परं विद्याधनं व्यये
सति नित्यमेवैधते । निर्धनजनानां विद्या एव धनं विद्यते । विद्याधनबले
ते सुदूरदेशं प्राप्तुं शक्नुवन्ति । सुखेषु दुःखेषु च विद्या चात्मरक्षां करोति
विद्याबलेनैवात्मबलस्य पुष्टिर्भवति । राजानः स्वदेशेषु पूजिताः सन्ति
विद्वज्जनानां तद्बलेनैव देशविदेशेष्वपि सर्वत्रैव सम्मानं भवति ।

यथा विद्यया दिशासु कीर्तिर्विस्तार्यते तथाऽन्योपायेन सा न भ
मर्हति । विपश्चितो विद्यासाहाय्येन स्वचिन्तनशक्त्या च देश-वि
बहुशास्त्राण्यधीत्य बहुयन्त्राण्याविष्कृत्य ज्ञान-विज्ञानादिपरिपूर्णा
ग्रन्थान् विरचय्य तत्तद्विषयीभूतच्छात्राननुपकृत्य यशोलभमाना दृश्यन्ते ।
डॉ० भावेति वैज्ञानिका यन्त्राणामाविष्करणे सिद्धहस्ताः । अस्माकं भ
देशादेव श्रीमत्स्वामिविवेकानन्दमहाभागो विदेशं गत्वा विद्याब
शून्योपरि चोजस्वि भाषणं दत्त्वाऽपूर्वं यशः प्राप, येन च वैदेशिका
भारतीयदर्शनं प्रति समुत्सुका अभवन् । देशेष्वपि बालगङ्गाधरति
महामना पं० मदनमोहनमालवीयश्च विद्याप्रभावेणाशेषख्याति
वन्तौ । सार्वभौमप्रचारसमित्या प्रकाण्डपण्डितेन श्रीमता वा
द्विवेदिना चोक्तम्—

**यादृशः शङ्कराचार्यः चाणक्यः सायणस्तथा ।**

**तिलको मालवीयश्च तादृशाः सन्तु पण्डिताः ॥**

एतज्जगति प्रायश्चराचरसर्वे प्राणिनः स्वबुद्धिप्रभावेणैव जीवितुमिच्छन्ति बुद्धिस्तु विद्याधीना भवति । मानवः प्राणिनां मध्ये चैतादृक् प्राणी विद्यते यस्मिन् सुदुर्लभं ज्ञानं ग्रहीतुं परमेश्वरेण योग्यता निहिता ।

अतो मानवा भाग्यबलेन लौकिकीं विद्यां समुपलभ्य तद्बलेनैव शनैः शनैरुत्तरोत्तरं दयादाक्षिण्यादिगुणैर्भक्तिभावेन च सद्गुरुचरणान्तिके पारलौकिकीं परां विद्यां लब्ध्वा जगत्कर्तारं भगवन्तं परमेश्वरस्य साक्षात्कारं कर्तुं सम्भविष्यन्ति, नाऽत्रसंशयावलेशः ॥



## पञ्चविंशतितमः किरणः

# "कलियुगपावनावतारिणः श्रीकृष्ण चैतन्यमहाप्रभोरौदार्यलीला"

कलियुगपावनावतारिणः"

"श्रीकृष्णचैतन्यमहाप्रभोरौदार्यलीला"

इतः पूर्वं नासीद् गिरिवरधराभिन्नवपुषः,
यदा भट्टाचार्योपरि करुणया दृष्टिरचला।
क्षणं वै साश्चर्यं चिरपरिचितञ्चापि चरितम्,
प्रकाश्यैश्वर्यं श्री सचलजगदीशो विजयते ।।

(स्वीयः)

अर्थात्—श्रीकृष्णचन्द्राभिन्नशरीरस्य श्रीचैतन्यचन्द्रस्य यदा सार्वभौमभट्टाचार्ये करुणया कलिताऽचलादृष्टिः पतिता निश्चयमेव तस्मिन् क्षणे विस्मयजनकं श्रीचैतन्यमहाप्रभोरेकमपूर्वं रूपं प्रकटितम्। षड्भिर्बाहुभिः शोभमानमपूर्वं रूपं भट्टाचार्यं दर्शयामास। बहूनामप्यवताराणां रूपमाधुर्यैः परिचितेनापि भट्टाचार्येण दर्शनस्य सौभाग्यमलब्धपूर्वं लब्धम्। उपरिस्थितयोर्द्वयोर्भुजयोर्धनुः शरश्च, मध्यस्थितभुजयोर्मुरलीं तथा शेषयोर्भुजयोर्दण्डं कमण्डलुं च संधार्य षड्भुजात्मकमैश्वर्यरूपं दधौ प्रभुः। एवं माधुर्यात्मिकामौदार्यलीलां प्रकटयन् प्रकाशयंश्च श्रीसचललजगदीशस्वरूपः श्रीचैतन्यचन्द्रोऽद्यापि नीलाचले (जगन्नाथपुर्यां) अर्चामूर्त्तिरूपेण चकास्ति।

उपर्युक्तश्लोकार्थेनाऽयम्भावः स्फुरति यत् श्रीचैतन्यमहाप्रभुः कलियुगस्याधमाधमान् पतितान् जन्मजन्मान्तरेऽपि मायाबद्धान् जीवानुन्मोच्य, कृपापूर्वकं तान् आत्मसात्कर्तुं तत्तद्विधा अचिन्त्य लीलाः प्रादुर्भावयत्। याश्च श्रीचैतन्यचरितामृते तथा च चैतन्यभागवतादिग्रन्थेषु विस्तरेण वर्णितः: सन्ति। आभिर्लीलाभिः संसारिजीवानिदमपि शिक्षयामास—हे बद्धजीवाः! मां साधारणं मनुष्यं मा जानीरन्। अहमेव त्रेतायुगे रामो द्वापरे च नन्दनन्दनः श्रीकृष्णोऽभवम्। अहमेव परब्रह्मपरमेश्वरोऽस्मिन् कलियुगे प्रच्छन्नरूपेण दण्डकमण्डलुधारी संन्यासिवेषेणावतीर्णः।

भगवतोऽसंख्यलीलास्त्वौदार्यलीलायास्तथामाधुर्यलीलाया एवं मुख्यतया प्राधान्यं भवति। आसु लीलासु ऐश्वर्यलीलान्तर्भुक्ता तिष्ठति। भगवान् लीलाः प्रकटयितुं तदनुरूपं विग्रहमपि धारयति। एतत्सर्वमीश्वरस्य चिच्छक्त्याविर्भूयते सर्वतन्त्रस्वतन्त्रो भगवान् स्वेच्छानुसारं लीलाविग्रहमाधाय, अन्तरङ्गभक्तानां सम्मुखे प्रादुर्भवति। यदा भगवान् माधुर्य लीलास्वादने तत्परस्तदा श्रीकृष्णचन्द्ररूपेण, यदा चौदार्यलीलास्वादने श्रीगौरचन्द्ररूपेण परिवर्तमानस्वरूप आस्ते । श्रीगौडीयवैष्णवानामयं मुकुटायमानः सिद्धान्तोऽस्ति । पुराणतिलके श्रीमद्भागवते गर्गवाक्यमेतत्प्रमाणभूतं वर्तते। गर्गमुनिः गोकुलाधिपं श्रीनन्दं बोधयितुमुपक्रमते।

हे महाराज! युगानुरूपं विग्रहमाकलयतो निश्चय रूपेणास्य तव पुत्रस्य शुक्लवर्णो रक्तवर्णस्तथा पीतवर्ण इति (सत्यत्रेताकलिषु) त्रयोवर्णा विख्याता आसन्, इदानीन्तु द्वापरयुगे तव पुत्रः कृष्णवर्णतां प्राप्त इति।

यथा हि भागवते---

**आसन् वर्णास्त्रयोह्यस्य गृह्णतोऽनुयुगं तनूः।**
**शुक्लोरक्तस्तथा पीत इदानीं कृष्णतां गतः।।**

(भा० १०/८/१३)

अयमाशयः—भगवान् श्रीकृष्ण औदार्यलीलाश्रयणायास्मिन् कलियुगे पतितोद्धारणहेतवे पीतवर्णेन श्रीगौरचन्द्ररूपेण नवद्वीपस्य मायापुरे १४०७ शकाब्दे ( १४८५ ई० ) फाल्गुनपूर्णिमायां सन्ध्यासमये जनन्याः शचीदेव्या गर्भसमुद्रात् श्रीचैतन्यचन्द्र आविर्भूतः। श्रीगौडीयवैष्णवाचार्यैः श्रीभक्तिविनोदप्रभुपादैः श्रीगौराङ्गलीलास्मरणमङ्गलस्तोत्रे संकेतितमपि च—

**राहुग्रस्ते जडशशधरे फाल्गुने पूर्णिमायां,**
**गौडे शाके मनुशतमिते सप्तवर्षाधिके यः।**
**मायापुर्यां समजनि शचीगर्भसिन्धौ प्रदोषे,**
**तं चिच्छक्तिप्रकटिततनुं मिश्रसूनुं स्मरामि।।**

अस्यावतारस्य सम्बन्धे विदेहराजस्य प्रश्नोत्तरे नवयोगिष्वन्यतमः करभाजनो विशदयति—हे महाराज! सत्यत्रेता-द्वापरयुगेषु नानाशास्त्र विधानेन श्रीभगवतो यजनं भवति, तथा कलियुगे समुचितं यजनविधानं मत्तः शृणु—

**नानाशास्त्रविधानेन कलावपि तथा शृणु—**

\+ + + + ( भा० ११/५/३१ )

**कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम्,**
**यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥**

अर्थात्—वर्णैः (अक्षरैः) कृष्णं, कान्त्या च अकृष्णं (गौरम्) महाप्रभु कलौयुगे, अङ्गोपाङ्गास्त्रपार्षदसहितं संकीर्तनमयैर्यज्ञैः विद्वांसः पूजयन्ति सेवन्ते च। संकीर्तनयज्ञस्याधिदेवता च श्रीगौरविग्रहश्चैतन्यमहाप्रभु रस्ति। संकीर्तनस्वरूपे यज्ञे, अङ्गोपाङ्गास्त्रपार्षदानाम् (क्रमशो मृदङ्ग, करताल (मंजीरा), श्रीहरिनाम एवं भगवद् भक्तः) चतुर्णामप्युपस्थितिः परमावश्यक्यनिवार्या च। एतैश्चतुर्भिर्विना संकीर्तनयज्ञस्य पूर्तिरसम्भवा। विशेषतः कलियुगे संकीर्तनयज्ञेन भगवानतिप्रसन्नः सञ्जायते। अतः—

विद्वद्गणैः संकीर्तनयज्ञैर्गौरविग्रहो नित्यमेव सेवनीयः। उपरितन-श्लोकेनेयमेव प्रेरणा प्रदीयते। एतेन सुस्पष्टं यदुद्धृतः श्लोकः कलियुगपावनावतारस्य श्रीकृष्णचैतन्य (गौराङ्ग) महाप्रभोरौदार्य लीलामुद्दिश्यैव श्रीमद्भागवते व्यासेनेङ्गितः। अथर्ववेदीय श्री चैतन्योप-निषद्यप्युक्तम्—

**एको देवः सर्वरूपी महात्मा गौरो रक्तः श्यामलश्वेतरूपः।**
**चैतन्यात्मा सर्वचैतन्यशक्तिर्भक्ताकारो भक्तिदो भक्तिवेद्यः।**

**नमो वेदान्तवेद्याय कृष्णाय परमात्मने।**
**सर्वचैतन्यरूपाय चैतन्याय नमो नमः ॥**

**वेदान्तवेद्यं पुरुषं पुराणं चैतन्यात्मानं विश्वयोनिं महान्तम्।**
**तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥**

(श्रीचैतन्योपनिषद्-६—८)

अर्थात्—महायोगी, त्रिगुणातीतो विशुद्धसत्त्वमयो द्विभुजः श्याम-सुन्दर एव स्वयं जाह्नवीतटे, गोलोकाख्यश्रीनवद्वीपधाम्नि गौरसुन्दर रूपेणावतीर्य अस्मिन् जगति भक्तेः प्रचारं करिष्यति पूर्णतया भक्तिं प्रति-ष्ठापयिष्यति च।

इत्थं परमदेवता, सर्वरूपी महापुरुषो गौरचन्द्रोऽतीतेषु त्रिषुयुगेषु (सत्यत्रेताद्वापरेषु) श्वेतम्, रक्तम्, श्यामलञ्च रूपं सन्दधाति। स

एवास्मिन्-कलियुगे चैतन्यस्वरूपः, चिच्छक्तिमान्, भक्ताकारो भक्तिदाता, भक्तिवेद्यः औदार्यलीलाया मूर्तिमान् विग्रहोऽस्ति। एवं वेदान्तवेद्यं श्रीकृष्णं परमात्मानं सर्वचैतन्यस्वरूपं श्रीचैतन्यदेवं पुनः पुनरपि नतेन शिरसा नमस्करोमि।

इति वेदान्तवेद्यस्य पुराणपुरुषस्य श्रीचैतन्यविग्रहस्य विश्वकारणीभूतस्य महत्स्वरूपस्य श्रीचैतन्यदेवस्य सात्त्विकरूपेण हृदये बोधावगमे जाते जीवो मृत्युमत्येति। एवं मायामतिक्रान्तुं नान्यदुपायान्तरं वर्तते।

अतएव—श्री गौरपार्षदप्रवरः श्रीश्रीलप्रबोधानन्द -सरस्वती प्रभुपादः, स्वरचिते चैतन्यचन्द्रामृतग्रन्थे मङ्गलाचरणप्रस्तावे श्रीचैतन्यदेवस्यौदार्यलीलामेव स्तौति—

**स्तुमस्तं चैतन्याकृतिमतिविमर्यादपरमा—**
**द्भुतौदार्यं वर्यं व्रजपतिकुमारं रसयितुम्।**
**विशुद्धस्वप्रेमोन्मदमधुरपीयूषलहरीं।**
**प्रदातुं चान्येभ्यः परपद-नवद्वीप-प्रकटम्॥**

अर्थात्—व्रजेन्द्रनन्दनादभिन्नमात्मानं स्थायिनीं परमप्रेमोत्थितां हर्षादिरूपां मधुरमधुराममृतलहरीम् आस्वादयितुं तथा च, अन्येभ्यः परमप्रियभक्तेभ्यः, उक्तामम‍ृतलहरीं प्रदातुं च नवधाभक्तेः पीठस्वरूपे परमधामरूपे नवद्वीपेऽवतीर्णं श्रेष्ठं करुणामयविग्रहं श्रीचैतन्यदेवनाम्ना प्रसिद्धं परम पुरुषं भूयोभूयः स्तौमीति।



# षड्विंशतितमः किरणः

# "मायाबद्धजीवानामेवं मायामुक्त-जीवानां गतिविधयः"

भारतीयदर्शने जीवात्मा ईश्वरस्यांशो मन्यते। स एव दुर्भाग्य वशाद्विशेषाऽवधानतया, ईश्वरं विस्मृत्यास्मिन् जीवलोके स्वकर्मफलभोगाय प्राणिरूपेण मातृकुक्षौ जन्म गृह्णाति। तदपि सः कीटादरभ्य मानव जन्मपर्यन्तं विविधासु पशुपतत्रियोनिषु परिभ्रमति।

महता पुण्येन नर-जन्म लब्ध्वा कश्चिदीश्वरोन्मुखो भवति। इदं जगन् जडमयमनित्यं नश्वरञ्च। इत्थं जीवस्य सुलभशरीरमपि नश्वर-मनित्यं वर्तते। एवं सहजतया प्रश्नः समुदेति—यदिनाम इदं जगदनित्यं, यदि चावागमनाय प्राप्तानि प्राणिनां शरीराण्याप्यनित्यानि तदा भगवान् परमेश्वर ईदृशीं लीलां कथङ्कारं सृजति ?

समाधानायेत्थमवगम्यते। अस्माकं देशे विविधैर्दार्शनिकैर्महर्षिभिर नेकानेकशास्त्राणां रचना विहिता। तैरेव महर्षिभिः प्रणीतशास्त्रैर्जीवस्य, जगतः ईश्वरस्य चेति त्रयाणां ज्ञानं सुलभं भवति। श्रुतिप्रमाणतः—"एकोऽहं बहु स्याम्" इति परमेश्वरस्य बलवतीच्छाऽस्ति। यदेकोऽपिसन् ईश्वरो बहुत्वं कामयते तदा तस्य सृष्टिलीला प्रारभ्यते। ईश्वरस्य सृष्टौ विश्वस्य सर्वविधा अपि विचित्रता दृष्टिगोचरा भवति। ईश्वरोऽपि विश्ववैभवं प्रकटयितुं शक्तेः साहाय्यमाददाति। शक्तेः साहाय्येन विना शक्तिमतः परमेश्वरस्येच्छापूर्तिर्नैव सम्भवा सम्पद्यते। सा च शक्तिः जीवशक्तिरूपेण, मायाशक्तिरूपेण, एवं चिच्छक्तिरूपेण त्रिविधा अस्ति। आसां शक्तीनां कार्याणि पृथग्विधानि सन्ति। जीवशक्तिरीश्वरस्य तटस्था शक्तिरस्ति। इयं शक्तिः परमेश्वरस्य विभिन्नांशतत्त्वभूतास्ति। जीवसंख्या-अगणिता वर्तते। जीवः ईश्वरस्य क्षुद्रांशरूपेणाथवाऽण्वंशरूपेवावतिष्ठते। इयं जीवशक्तिः—समग्रेऽपि विश्वे कीटादारभ्य मानवपर्यन्तं निखिलेषु प्राणिषु व्याप्तचररूपा वर्वते। जीवस्य स्वरूपविषये श्रुतेरयमुद्घोषो विजयते—

केशाग्रशतभागस्य शतधाकल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥

(श्वेताश्वतर)

एकं केशाग्रं शतभागेषु विभज्य तदनन्तरं तस्यैकं भागमादाय तस्यापि शतभागान् विधाय यो निर्मितः कल्पितांशः तत्सदृशो जीव इति संज्ञयाऽनुसन्धीयते। अनन्ता जीवशक्तिरित्यपि कल्प्यते। इयमात्मनः परिकल्पनारूपेण समुदेति, अर्थादियमेव जीवशक्तिः "आत्मा" इति रूपेण निश्चीयते। इयमेव शक्तिः शास्त्रेषु जीवशक्तिस्तटस्थाशक्तिस्तथात्मशक्ति रूपेणापि व्यवह्रियते। अस्य जीवस्य कार्यं सदैवेश्वरस्याधीनत्वमिति विहितम्। ईश्वरस्याधीने स्थित्वा तस्यैवसेवकत्वधर्मस्वीकरणमति-शाश्वतसिद्धम्। इयं जीवशक्तिः स्वरूपतः ईश्वरस्याधीनस्था तिष्ठन्ती तस्य दासरूपेणाऽपि स्वीकृता वर्तते। ईश्वर एव स्वामी। ईश्वरजीवयो-रुभयोरपि पारस्परिकः सेव्यसेवकभावरूपो नित्यः सम्बन्धः स्थिरीकृतः। यदा जीवो दैवदुर्विपाकादीश्वरस्याधीनत्वं परिहाय स्वातन्त्र्यं भजते, तदा मायाशक्तिस्तं बलादाकर्षति। मीयतेऽनयेति माया। इति मायाशक्ति र्जीवमविद्याया अज्ञानस्य वा क्षेत्रान्तर्गतं हठान्नयति। तदनन्तरं प्रपञ्चना-परम्पराभिर्जीवं प्रतार्य, ईश्वरवैमुख्यविधाननिरतं विविधेषु सुखदुःखेषु नित्यं निमज्जयति।

**एतादृशी मायाशक्तिर्द्विविधरूपेणावतरति।**

१—महामाया २—योगमाया च। अनयोर्मध्ये महामायया विमोहिताः सांसारिकभोगैश्वर्येषु पतिता ईश्वरविमुखाः सन्तो जीवाः, अनादिकालं यावत् जन्ममरणपरम्परासु पच्यन्ते। इत्येत एव मायाबद्ध-जीवाः सन्ति। उक्तञ्च वङ्गसाहित्ये भक्तिशास्त्रग्रन्थे "प्रेमविवर्ते"—

**पिशाची पाइले येन मतिच्छन्न हय।**
**मायाग्रस्त (बद्ध) जीवेर हय से भाव उदय॥**
**(प्रेमविवर्त)**

यथा भूत-प्रेताविष्टव्यक्तेर्मानसिकावस्था विकृता भवति तथैव माया-ग्रस्तस्यापि मानवस्य मनः सर्वदा विकारविमूढं जायते। एतादृश व्यक्तेर्मनसि धनजनानामहङ्कारः सदैवोद्दामरूपेण समाविष्टोभवति। माया-कवलिता जनाः सदैव कनिष्ठानामुपेक्षां श्रेष्ठानाञ्चावज्ञामेव विदधते। उपकारिणां कृतेऽपि तेऽपकारभावनयाभिभूता मत्सरिणो जायन्ते। इति ते 'स्वयं नष्टः परान्नाशयति" इत्युक्ति' चरितार्थयन्ति। एवम्भूताः कैतवपूर्णा जनाः सदैवेश्वरविमुखाः सन्तः किं कर्त्तव्यविमूढाः, विषयचिन्तापरायणाः, अहितमेव हितं मन्वानाः क्रमेणाऽधोगतिं प्रयान्ति। एवंविधानस्थिर

प्रज्ञान्मायाबद्धान् विषयिणो जनानुद्दिश्यैव गीतायां भगवतः श्रीकृष्ण-स्यार्जुनं प्रत्युक्तिः—

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ।।
क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ।।

( गीता )

ईश्वरविमुखा मायाबद्धा अस्थिरप्रज्ञा विनाशोन्मुखगामिनो जीवाः, बलादेवाऽधोलिखितानि सोपानानि पारयितुं विवशाभवन्ति ।

प्रथमं सोपानम्—महामायाप्रभावेण हरिभजनप्रत्यूहरूपं विषय-चिन्तनम् ।

द्वितीयं सोपानम्—दुःसङ्गः (असज्जनानां हरिविमुखानां सङ्गः)
तृतीयं सोपानम्—कामः (विविधाः कामनाः)
चतुर्थं सोपानम्—क्रोधः (कामनापूर्त्तेरभावेः)
पञ्चमं सोपानम्—सम्मोहः (सम्यक् प्रकरेण मोहो भ्रमः प्रमादश्च)
षष्ठं सोपानम्—स्मृतिविभ्रमः (स्मरणशक्तेः ह्रासः)
सप्तमं सोपानम्—बुद्धिनाशः (सदसद्विचारशून्यता, विवेकभ्रष्ठता)
अष्टमं सोपानम्—प्रणश्यति (प्रकृष्टेन नश्यति, विनाशं प्राप्नोति)

परमेश्वरं विस्मृत्य मायाया आवाहने ईदृश्यनिष्टामतिर्जायते । यथा—

कृष्ण बहिर्मुख हइया भोगवाञ्छाकरे ।
निकटस्थ माया तारे झापटिया धरे ।। (प्रेमविवर्त)

यदा—भगवतः श्रीकृष्णादथवा भगवतो रामात्पराङ्मुखा मायाबद्ध-जीवाः—ऐहिकभोगानाकाङ्क्षन्ते, तदा सद्य एव, निकटस्थिता भगवतो बहिरङ्गा शक्तिर्महामाया, ईश्वरविमुखं तं जीवाधमं बलादाश्लिष्य-गृह्णाति । येन ततो विमुक्तिरसम्भवप्रायाभवति । परिणामस्वरूपेण—अष्टावपि सोपानान्यतिक्रम्य मृत्युमुखे प्रविशति । इत्येषा वर्णिता मायाबद्ध-जीवस्य कथा ।

अथ मायामुक्तजीवानां विषये विचार्यते—मायामुक्तजीवाः—मायाबद्धजीवेभ्यो विपरीतलक्षणवन्तो भवन्ति । महामाया, योगमायेति

नाम्ना द्विविधो मायास्वरूपः प्राक् चर्चितप्रायः। यथा मायाबद्धजीवेषु महामायाया अधिकारस्तथैवमायामुक्तजीवानामुपरि योगमायाया अधिकारो भवति। यया शक्त्या पुण्यशालिनाँ भाग्यवतां जीवानामीश्वरेण-सह योगयुक्तं सङ्गमनं भवति सैव शक्तिर्योगमाया। इयमेवेश्वरस्यान्तरङ्गा शक्तिः, चिच्छक्तिरपि निगद्यते। प्राक्तनजन्मसु ये सुकृतिमन्तो जीवाः परमेश्वरोन्मुखाः सञ्जायन्ते तेषु योगमायाया एव कृपादृष्टिः सम्भवति। तस्याः कृपयैव जीवानां मनांसि निर्मलानि प्रसादसदनानि च सञ्जायन्ते। तेषां कार्यव्यापारेऽगाधधीरत्वं हृदये सोत्साहता चाऽऽसाते। योगमाया बलान्विता जीवा विपुलदुःखशोकक्षणेष्वीश्वरं नैव विस्मरन्ति। "तस्मिन् तुष्टे जगत्तुष्टम्" इत्याभाणकदिशा तोषमुपगते हि परमेश्वरे सर्वे सामाजिका अपि परां तुष्टिमुपयान्ति। गोस्वामिपादेनापि मानसे—

जापर कृपा राम की होई। तापर कृपा करइं सब कोई॥

इति प्रतिपादितम्। विचारणीयोऽयं विषय :—कश्चित्पुरुषः प्रयत्न शतेनापि स्वीयंकार्यं साधयितुं नैव क्षमते। अपरः कश्चित्पुरुषः स्वल्पायासे-नैव दुष्कराण्यपि कार्यजातानि सरलतयैव संसाधयति। अत्रावश्यमेव-किमपि रहस्यमस्ति। कोऽपि वा कारणविशेषः। महामाया कार्ये व्याघातं प्रस्तौति, योगमाया च कार्ये सिद्धिमुपदिशति। इत्यत्र व्यवहारदृष्टिं परिहृत्य परमविशुद्धाध्यात्मिकदृष्टिः समाश्रयणीया। इदानीं गंभीरतरदृष्ट्यानुसन्धेयम्—मायामुक्त जीवानामीश्वरस्यावतारविशेष रुचिरुत्पद्यते। रुचिविशेषबलात्ते भक्तिं लभन्ते। भक्तिबलात्ते भगवति सेवाभावाभिनिविष्टचेतसो जायन्ते। तदा तेषाँ बुद्धौ चैषः प्रकाशः समुदेति। (१) अहमपराधनिलयोऽस्मि। (२) अकिञ्चित्करोऽस्मि। (३) अनाथोऽस्मि। इति जाते प्रकाशोदये जीवः स्वीयामकिञ्चनतामनुभवति। अकिञ्चनावस्थामनुभवन्नपि यदि संसारप्रपञ्चेषु निरतोऽपि भवति, तदप्यन्तर्यामिभगवान् तस्मै सद्बुद्धिं प्रददाति। तदा, उद्बुद्धया सद्बुद्ध्या मायामुक्तः सन् योगमायामाश्रित्य जीवः परयोपासनया चेश्वरं प्राप्नोति। श्रीमद्भागवते —कुन्ती—"त्वामकिञ्चनगोचरम्" इत्यादिना भगवन्तं श्रीकृष्णं प्रार्थयामास—अपि च—

**नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये।**

**आत्मारामाय शान्ताय कैवल्यपतये नमः।**

(भा० १/८/२६-२७)

अस्मिन् श्लोके—"अकिञ्चनवित्ताय" इति शब्दो नितरामभिप्रेतः, महतीमभिख्याञ्च तनोति। अकिञ्चनाः, भौतिकं द्रविणपुत्र-कलत्रादिकम् अवमान्य केवलमीश्वरमेव स्वीयं धनं मन्यन्ते। ईश्वरोऽप्यकिञ्चन भक्तानेव नैजं धनं स्वीकुर्वन्ति। इत्यकिञ्चनानां वित्ताय, एवमकिञ्चनं वित्तं यस्येति व्युत्पत्तिद्वयमत्र स्वीक्रियते। प्रकृतिगुणरहिताय आत्मारामाश्च मुनयो यस्मिन् रमन्ते तत्स्वरूपाय कैवल्यप्रदान—समर्थाय शान्तरूपिणे भगवते परमात्मने श्रीकृष्णाय नमः।

अत्र नास्ति किञ्चन यस्य सः (अति निर्धनोदरिद्रो-वा) इति व्युत्पत्तिलभ्योऽर्थो नैवाभीष्टः। निखिले वैभवकदम्बे प्रस्तुतेऽपि यस्य हृदयेऽकिञ्चनभावना स एवाकिञ्चनपदवाच्यः। सर्वाण्यपि वस्तुजातानीश्वरस्यैव सन्ति न ममेति, ईश्वरार्पणबुद्धिर्यस्य व्यवसिता इत्येवभूतोऽकिञ्चनोऽत्रेप्सितः। ईश्वरभक्तौ समासक्तचेतसां मायामुक्तजीवानामेवैष विचार—प्रबोधः समुदेति।

येषां हृदि सदैव परमेश्वरं प्रसादयितुं वृत्तिर्जागर्ति त एव चिच्छक्तियोगमायावलम्बितचेतसो मायामुक्तजीवाः सन्तितेषां कृत एव परमात्मा श्रीकृष्णः प्रणयि-जनमङ्गलविधायिनीं निजां प्रकृतिमुद्घोषयति—

"ददामि बुद्धियोगं तं येन मामुपयान्ति ते"

(गीता १०/१०)

अन्ततो येषां हृदये तैलधारावद्भगवच्चिन्तनवृत्तिः समुदेति तएव देवदुर्लभां परमात्मनश्चिरकाम्यां प्रपत्तिं (शरणागतिं) लभन्ते। संप्रदायप्रपत्तौ जीवानां सर्वेऽप्यहङ्कारा विनष्टप्राया भवन्ति तदा मायामुक्त जीवानामिदं ज्ञानं सहजभावेन स्वयमेव समुदेति—

**वासुदेवपरा वेदाः वासुदेवपरा मखाः।**
**वासुदेवपरा योगाः वासुदेवपराः क्रियाः॥**
**वासुदेवपरं ज्ञानं वासुदेवपरन्तपः।**
**वासुदेवपरो धर्मो वासुदेवपरा गतिः॥**

(भा० १/२/२८)

तदा जीवः सिद्धावस्थां प्राप्य "वासुदेवः सर्वम्" इति अनुभवति। शास्त्रसम्मत्या एवम्भूतो महात्माऽतीवदुर्लभः।

एवमत्र—मायाबद्धजीवानां मायामुक्तजीवानाञ्च गतिविधिविषये दिग्दर्शनमिति।

# सप्तविंशतितमः किरणः

## श्रीकृष्णचैतन्यमहाप्रभुणा सम्बद्धं साहित्यजातम्

(१) महाप्रभोः पार्षदेन श्रीजगदानन्देन बंगभाषायां 'प्रेमविवर्त्त'' नामको ग्रन्थः प्रणीतः । यस्मिन् श्रीमहाप्रभोराविर्भावविषये सख्यप्रेम्णो तत्वविषये च सारगर्भितं वर्णनमुपलभ्यते । तत्र-मङ्गलाचरणचर्चा चेत्थम्—

अखण्ड अद्वयज्ञान सब तत्वसार ।
सेइ तत्वे दण्ड पर णाम वार वार ॥१॥
सेइ तत्व कभु दुइ राधाकृष्ण रूपे ।
कभु एक परात्पर चैतन्य स्वरूपे ॥२॥
चैतन्येर रूपगुणे सदा पड़े मने ।
पराण कांदाय देह कांपाय सघने ॥३॥

(२) दाक्षिणात्यवैष्णवसंन्यासी श्रीप्रबोधानन्दसरस्वतीद्वारा लिखितं—"श्रीचैतन्यचन्द्रामृतं" संस्कृतकाव्यमस्ति । द्वादशसु भागेषु विभक्ते अस्मिन् ग्रन्थे महाप्रभोर्महिमा वर्णितः

सिंहस्कन्धं मधुर मधु रस्मेरगण्डस्थलान्तम्,
दुर्विज्ञेयोज्ज्वलरसमयाश्चर्यनानाविकारम् ।
बिभ्रत् कान्तिं विकचकनकाम्भोजगर्भाभिरामा-
मेकीभूतं वपुरवतु वो राधया माधवस्य ॥

ग्रन्थकारो राधाकृष्णयोर्मिलितां तनुं श्रीचैतन्यचन्द्रमेवाङ्गीकृतवान् ॥

(३) उक्तस्यैव लेखकस्य "श्रीनवद्वीपशतकम्" अन्यत् संस्कृत काव्यमस्ति यस्मिन् नवधाभक्ति पीठस्य नवद्वीपस्य वर्णनं वर्तते ॥

(४) श्रीमहाप्रभोः रूपगुणलीलाः अधिकृत्य श्रीसार्वभौमभट्टाचार्येण प्रणीतं "श्रीचैतन्यशतकम्" नाम संस्कृतकाव्यम् ।

(५) श्रीगौरपार्षदप्रवरेण श्री वृन्दावनदासेन बंगभाषायां "श्रीचैतन्य भागवतं" प्रणीतम् । यस्मिन् महाप्रभोः आदिमध्यान्तलीलानां त्रिषु खण्डेषु विशदं साङ्गोपाङ्गवर्णनमस्ति । यस्य प्रशंसायां श्रीकृष्णदासकविराज गोस्वामिना श्रीचैतन्यचरितामृतग्रन्थे" वर्णितम्—

वृन्दावन दास कैल चैतन्य मंगल ।
याहार श्रवणे नाशे सर्व अमंगल ॥
वृन्दावन दास पदे कोटि नमस्कार ।
ऐसे ग्रन्थ करि येहों तारिल संसार ॥

"श्रीचैतन्यभागवतस्य" प्राक्तनं नाम चैतन्यमङ्गलमासीत्" ।

(६) "श्रीचैतन्यचरितामृतम्" श्रीकृष्णादासकविराजगोस्वामिना विरचितं बंगसाहित्येऽपूर्वकाव्यम् । अस्मिन् संस्कृतस्य श्लोकावलीभिः श्रीचैतन्यमहाप्रभोः सिद्धान्तानां व्याख्या विशदीकृतास्ति । त्रिषु भागेषु विभक्तोऽयं ग्रन्थः, देवनागर्यामपि लिपिबद्धोऽस्ति ।

(७) श्रीगौरपार्षदप्रवरेण "श्रीमन्नरहरिसरकारेण" "भक्तिरत्नाकर" नामा ग्रन्थः प्रणीतः यस्मिन् महाप्रभोर्भक्तिमार्गस्य विवरणं वर्तते ।

(८) भक्तिरसस्य सुविख्याताचार्येण श्रीरूपगोस्वामिपादेन विरचितं "श्रीचैतन्याष्टकम्" वर्तते यस्मिन् श्रीचैतन्य महाप्रभोः रूपगुणलीलानाञ्च विशदं वर्णनं प्रस्तुतम्—

सदोपास्यः श्रीमान् धृतमनुजकायैः प्रणयितां-
वहद्भिर्गीर्वाणैर्गिरिशपरमेष्ठिप्रभृतिभिः ।
स्वभक्तेभ्यः शुद्धां निजभजनमुद्रामुपदिशन्,
स चैतन्यः किं मे पुनरपि दृशोर्यास्यति पदम् ॥

(प्र० भ० १)

(९) श्रीरघुनाथदासगोस्वामिना विरचितं 'श्रीचैतन्याष्टकम्' श्रीगौराङ्गस्तवकल्पतरुश्चेत्याद्यु-ज्ज्वलभक्तिरसस्यापूर्वग्रन्थोऽस्ति । अष्टकेतुमहाप्रभुर्गौररूपं कथमङ्गीकृतवान् ? इत्येतस्य विहितं समाधानम् ।

कदाचिद् वृन्दावने वसन् श्रीकृष्णो दर्पणे निजं मनोहरं रूपं विलोक्य विचारमग्नः समजायत । मदीया परमप्रेयसी राधा मम रूपमाधुर्यस्य दर्शनमात्रेणैव यत्सुखसारसर्वस्वमनुभवति तदनिर्वचनीयं सुखं राधेव गौररूपमाकलय्य कथमास्वादयितुं प्रभविष्यामि ?

हरिर्दृष्ट्वा गोष्ठे मुकुरगतमात्मानमतुलं,
स्वमाधुर्यं राधा प्रियतरसखी वाप्तुमभितः ।

**अहो गौड़े जातः प्रभुरपरगौरैकतनुभाक् ।**
**शचीसूनुः किं मे नयनसरणिं यास्यति पुनः ॥१॥**

अर्थात्—यो हि भक्तवत्सलः श्रीकृष्णो व्रजधाम्नि दर्पणे प्रतिबिम्बितं निजमनुपमं श्रीविग्रहं विलोक्य परमप्रेयस्याः श्रीराधाया इव निजं माधुर्यमनुभवितुं राधाया गौरकान्तिमाश्रित्य, अर्थात् राधाकृष्णयोर्मिलितविग्रहं सन्धार्य गौड़देशे, आविर्भूतः, अहो स शचीनन्दनप्रभुः किमस्माकं दृष्टिपथं पुनरारूढो भविता ? ।

"श्रीचैतन्यचरितामृत" प्रमाणानुसारमेकदा शुद्धाद्वैतप्रतिपादकः पुष्टिमार्गीयश्रीवल्लभाचार्यः श्रीमद्भागवतस्याभिनवां टीकां विरचय्य महाप्रभुं श्रावयितुं पुरीधाम्नि प्रापत् । तत्र टीकायां प्रथमटीकाकारस्य श्रीधरस्वामिनो मतस्य खण्डनं दृष्ट्वा महाप्रभुस्तामस्वीकृत्य श्रीवल्लभाचार्यमाह—

**श्रीधरस्वामि निन्दि निजटीकाकर ,**
**श्री धरस्वामि नाहिं मान एत गर्वधर ।**
**श्रीधर ऊपरे गर्वे ये कछु लिखिबे ,**
**अर्थ व्यर्थ लिखन सेइ लोक ना मानिबे ,**
**श्रीधर अनुगते येकरे लिखन ,**
**सब लोक मान्यकरी करि बे ग्रहण ॥**

विविधछन्दो बद्धं विंशति-सर्गपरिमितं

(१०) श्रीकविकर्णपूरविचितं श्रीचैतन्यचरितमहाकाव्यं, "श्रीगौरगणोद्देशदीपिका" तथा श्रीचैतन्यचन्द्रोदयनाटकमिति ग्रन्थत्रयं संस्कृत साहित्येऽनुपमानाभिख्यां पुष्णाति । अत्र किंवदन्ती चास्ति—

श्रीचैतन्यमहाप्रभोरनुग्रहेण पञ्चवर्षदेशीयः कर्णपूरः कवित्वशक्त्या सम्पन्नः समजायत । पण्डितराजस्य जगन्नाथस्यात्र चकास्त्यभिमतम्—

**"बालादेस्तौ विनाऽपि केवलान्महापुरुषप्रसादादपि प्रभवोत्पत्तेः ॥**

अयम्भावः—प्रतिभात्वावच्छिन्नं प्रत्यदृष्टस्य व्युत्पत्त्यभ्यासयोश्च तृणारणिमणिन्यायेनैव कारणता, अन्यथा कर्णपूरप्रभृतीनां बाल्य एव व्युत्पत्त्यभ्यासवैधुर्य्येऽपि प्रतिभोत्पत्तिदर्शनात् व्यभिचारःस्यात् । पञ्चवर्षवयस्कस्य कर्णपूरस्य मुखे प्रसह्य श्रीकृष्णचैतन्येनाङ्गुल्यग्रं प्रवेश्य सद्यो विलक्षणा कविताशक्तिराविर्भूता इति जनश्रुतिः (रसगङ्गाधरप्रथमाननम्)

(११) आर्यवर्यश्रीलविश्वनाथचक्रबर्तिविरचितं "श्रीमन् महाप्रभोरष्टकालीय-लीला–स्मरणमङ्गलस्तोत्रम्"। यस्मिन् ललितपदावलिभिः श्रीकृष्णलीलास्मरणात्पूर्वं महाप्रभोर्लीलास्मरणविधिर्निर्दशितोऽस्ति।

(१२) परवर्तिकाले श्रीगौडीयवैष्णवाचार्यश्रीभक्तिविनोदप्रणीतं श्रीगौराङ्गलीलास्मरणमङ्गलस्तोत्रं श्रीगोद्रुमचन्द्रभजनोपदेशातिललित-पदावलीभिः समायुक्तमस्ति।

(१३) श्रीमत्पुरीदासगोस्वामिकृतः "श्रीचैतन्यलीलामृतसारः" संस्कृते गद्यमयः काव्यग्रन्थोऽस्ति।

(१४) महाप्रभोः समकालिकेन श्रीमद्रूपगोस्वामिपादेन तथा हनुमदवतारश्रीमुरारिगुप्तप्रभुपादेन च सर्वप्रथमं महाप्रभोर्गंभीरभक्ति भावाः "कड़चा" (क्रोड़पत्र) रूपेण सद्य एव लिपिबद्धाः क्रियन्ते स्म श्रीरूपकडचादिग्रन्थे, उद्धृतानि प्रमाणान्याहृत्य महाप्रभुणा सम्बद्ध संख्यातीतं साहित्यं सृष्टम्।



# अष्टाविंशतितमः-किरणः

## "श्रीकृष्णचैतन्यमहाप्रभोरवदानम्"

अस्मिन्धरातले कलियुगपावनस्वभजनविभजनप्रयोजनाऽवतारिणः श्रीकृष्णचैतन्यचन्द्रस्य रूपगुणक्रियादिसकललोकेत्तरगुणगणभिन्नतया साक्षाच्छ्रीकृष्णस्वरूपत्वादनर्पितचरीमुन्नतोज्ज्वलरसां स्वभक्तिश्रियमौदार्थमयीमैश्वर्य्यञ्च समर्पयितुं श्रीकृष्णनाम प्रेमप्रचारद्वारेणैव श्रीनवद्वीपस्थमायापुर्य्यां सप्ताधिकचतुर्द्दशशततमे शकाब्दे श्रीमज्जगन्नाथमिश्रभवने श्रीमतीशचीदेवीगर्भसमुद्रे समजनिष्ट। येषां साम्प्रतिकं पञ्चशताब्दीपूर्त्तेः सौभाग्यवशान्महामहोत्सवं वयमनुभवामः।

श्रीमन्महाप्रभोराविर्भावात्पूर्वं महामहिमशालिनः श्रीमदद्वैताचार्य्यादिकतिपयश्रीकृष्णैकान्तिकभक्तवृन्दादतिरिक्ता धिकांशजनाः श्रीहरिविमुखप्रायास्तत्रसन्ति तिकथने काप्यत्युक्तिर्न भवेत्।

श्रीमन्महाप्रभुर्वयः क्रमे बाल्यपौगण्डादिलीलामतिक्रम्य तदानीन्तनान् श्रीवासादीन् भक्तजनान् स्वाश्रितरूपेणाऽङ्गीचकार। ततस्तैः सह लीलाविलासादिरूपेण विश्वजनेभ्यो यानि यान्यपूर्वपरिकलितान्यवदानानि वितीर्णानि तेषां श्रीहरिगुरुवैष्णवचरणकृपावलवेनात्र दिग्दर्शनं क्रियते।

(१) महाप्रभुणा शैशवादेव शिशुसुलभक्रन्दनव्याजेन प्रतिवेशिपारिवारिकचिरपरिचितस्त्रीजनमुखेभ्यः कलिकल्मषविध्वंसने समर्थमतिपवित्रंश्रीहरिनामोच्चारितमकारि।

(२)अतिथिकविप्रनिवेदितं पक्वान्नमिष्टदेवत्वेन स्वीकृत्य ततस्तत्प्रच्छन्नभगवत्तत्त्वमनुकम्पया विज्ञाप्य च तत्त्वतस्तत्तीर्थाटन-फलं दर्शयामास

(३) पौगण्डागमे चोच्छिष्टवर्जितभाण्डोपरि चोपविश्य "हरिः सर्वत्र-सर्व्वदेति" "शुनि चैव श्वपाके च पण्डिताः समदर्शिनो भवन्तीति" ज्ञानं स्वमात्रे चोपदिष्टं यथा भक्तिज्ञानं मातृदेवहूत्यै कपिलमुनिना।

(४) श्रीगयाक्षेत्रे लोकशिक्षणार्थमाचार्य्येश्वरपुरीं प्राक्छलेन शासनयोग्यं (शिष्यं) निर्माय पश्चात्तद्वक्त्रतः स्वेष्टमन्त्रं समुपलभ्य गौडदेशमागम्यात्मतत्त्वव्याजेन भगवत्तत्त्वं प्रकाशयामास। एतेनाऽनादिकालान्मायाबद्धजीवानां श्रीगुरुचरणाश्रयं विना चात्मोद्धारं नास्तीति महतीं शिक्षां प्रददौ।

(५) तदानीन्तननवधाभक्तिपीठाख्ये श्रीनवद्वीपमण्डले सर्व्वदेव नगरग्रामपुरेषु परावरजीवनिचयेषु व्रजपतिश्रीकृष्णनामसमूहं श्रीमन्नित्य-

नन्दहरिदासाभ्यां वितरणपूर्बकं परमपतितौ जगदानन्दमाधवानन्द कलिपापपङ्कादुद्धृत्यस्वपाषर्दतां प्रापयत्। तन्मिषेण च विश्वस्मिन्नस्मिन्न वतारे पतितपावनेति नाम्ना लौकेरुद्घोषितः सन् तावात्मसात्कृत्वा श्रीकृष्ण प्रेमार्णवे निमज्जयामास।

(६) महाप्रभुणा स्वरूपतः श्रीगोपीभावेन विभावितः सन् जड़मति तार्किकमूढ़ान् शास्त्रलगुड़ेन ताडितत्वात्तेषां वैरभाववशात्तेषामपराधा प्रशमनार्थमेकत्रिंशवर्षाधिकचतुर्दशशततमे शकाब्दे चतुर्विंशवयसि माघ मासे कण्टकनगर्य्यां भाग्यवतो भारतीयसाम्प्रदायिककेशवन्यासिनस्निदपि संन्यासं संसारमनित्यतामुपदिशंल्लोकशिक्षार्थं गृहीतम्।

(७) ततश्च स्वगृहस्वजनसहितं श्रीनवद्वीपभूमिं त्यक्त्वा परमप्रीति वशतः श्रीमन्नित्यानन्दनिदेशतो ब्रजजिगमिषामिषेण भावावेशे जाह्नवी यमुनां मत्वा ब्रजभावतया शान्तिपुरं प्राप्याऽद्वैताचार्यप्रेरणया स्वमातरम वलोक्य तद्धस्ताभ्यां भिक्षां प्रगृह्य मातुरभीष्टेन दामोदरजगदानन्दमुकुन्द सार्धं श्रीनीलाचलपतिमचलजगदीशदर्शनेच्छुकः सचलजदीशः श्रीक्षेत्रगमन मतिश्चकार। एतेन तेन न्यासिजनानां कृते पुनः स्वभवनगमनं नियमविरुद्ध मिति जगज्जनेभ्योऽपूर्वशिक्षा प्रदत्ता।

(८) तदनन्तरमोढ़देशं प्रविश्यैकाम्रकानने श्रीक्षेत्रपालशिवं प्रणम्य ननर्त च। ततो न्यासदण्डं विहाय कापोतकाख्यं शिवपुरं गमनावसरे श्रीमन्नित्यानन्दप्रभुणेश्वरं वर्णाश्रमातीतमिति बुद्ध्या तन्यस्तदण्डं विभक्तं तेन महाप्रभुः कृत्रिमरोषं प्रकाश्य चैकाकीभावावेशे द्रुतवेगेनागत्य नीला चलपतिं श्रीकृष्णमूर्त्तिमाश्लेषमुद्रया ददर्श मुमूर्च्छ च।

(९) पार्श्वस्थेन विद्वत्सार्वभौमभट्टाचार्य्येण भावाविष्टमष्टसात्त्विक विकारयुक्तं तं जगदीशसेवकैः स्वालयमानीयोपस्थापितवान्। इतस्ततः श्रीमन्नित्यानन्दादिप्रभुपार्षदवृन्दास्तत्पदाङ्कानुसृत्य श्रीमद्भट्टाचार्य्यमन्दिरे भावाविष्टां श्रीमूर्तिं प्राप्य तारस्वरेण श्रीकृष्णकीर्त्तनं श्रावयामासुः। श्रीहरि कीर्त्तनं कर्णकुहरे प्रविष्टत्वात्कृष्णप्रेम्णा मूर्च्छितस्य प्रभोस्तृतीयप्रहरे संज्ञाज्ञानं प्रत्यावर्त्तितम्। ततश्च भक्तवृन्दैः सह पारस्परिकपरिचयावसरे नित्यपार्षदं सार्व्वभौमं निरीक्ष्य महाप्रभुश्चातिमुमुदे। भगवत्प्रसाद सुदुर्ल्लभत्वेऽपि तत्र प्रभुप्रेरणया श्रीमद्भट्टाचार्य्येणाऽऽनीतं श्रीक्षेत्रसुलभ महाप्रसादं संसेव्यान्ते कतिदिवसमिष्टगोष्ठीक्रमेण विद्वत्सार्वभौमात्सप्त दिवसावधि सवेदान्तभागवतशास्त्रश्रवणव्याजेन परमकरुणया भट्टाचार्य्य स्वप्रच्छन्नावतारमुद्घाटय षड्भुजात्मकं स्वस्वरूपं दर्शयामास।

ततः प्रभृतितस्यद्विभुजसत्त्वेऽपि षड्भुजगौराङ्ग इति नाम्ना प्रसिद्धिरभवदिति शिक्षाप्राप्यतेऽस्माभिर्यत्कलियुगेऽपि भगवदवतार आसीत्। यतोहि—

**इतः पूर्वं नासीद्गिरिवरधराभिन्नवपुषः,**
**यदा भट्टाचार्य्योपरिकरुणया दृष्टिरचला।**
**क्षणं वै साश्चर्य्यं चिरपरिचितश्चापि चरितम्,**
**प्रकाश्यैश्वर्य्यं श्रीसचलजगदीशो विजयते ॥**

**अस्यार्थः पञ्चविंशतितमे किरणे व्याख्यातः।**

(स्वकीयपद्यम्)

अवतारत्वेऽपि च श्रीमद्भागवतं प्रमाणयति यथा—

**आसन् वर्णास्त्रयोह्यस्य गृह्णतोऽनुयुगं तनूः।**
**शुक्लो रक्तस्तथापीत इदानीं कृष्णतां गतः॥**

**(भा० १०।८।१३ गर्गवाक्य)**

गर्गाचार्य्येणोक्तं प्रतियुगं तनूं गृह्णतोऽस्य कुमारस्य शुक्लादयः, त्रयोवर्णा आसन् इदानीं द्वापरान्ते कृष्णतां गतः। स्वयमवतारी यथा तेनैव प्रकारेण इदानीं कलियुगादिभागे पीत इति किञ्चित्स्थूलकालमवलम्ब्य इदानीमिति पदस्य उभयत्राप्यन्वय इति। एवञ्च वैवश्वतमन्वन्तरगताष्टविंशचतुर्युगीयद्वापरकलियुगयोः स्वयमवतारी कृष्णाः पीतश्च प्रादुर्भवति।

( इति प्राचीनचैतन्यचरितामृतस्थ टीका )

(१०) ततो महाप्रभुर्दक्षिणयात्राच्छलेन श्रीकूर्मक्षत्रे दैवदुर्विपाकात् कुष्ठरुजा प्रपीड़ित वासुदेवविप्रं प्रेमाश्लेषेण निरोज्य गोदावरीतटे विद्यानगर्य्यां श्रीरायरामानन्देन साकमिष्टगोष्ठ्या कृष्णतत्त्वराधातत्त्वप्रेमरस लीलातत्त्वानामास्वादनपूर्वकं प्रेमिजनेभ्यः कृष्ण-प्रेम प्रायच्छत्।

(११) श्रीमन्महाप्रभुः श्रीरङ्गक्षेत्रस्थवेङ्कटभट्टाख्यश्रीवैष्णव विप्रस्याऽऽग्रहेण चातुर्म्मास्य काले तद्भवने निवसंस्तं श्रीहरिकथा प्रसङ्गक्रमेण श्रीकृष्णस्याऽसमोर्द्धवत्वतत्त्वं शिक्षयामास। तत्प्रभावेण च तत्पुत्रः श्रीमद्गोपालभट्टादितत्रत्यासंख्यजनाः श्रीकृष्णभजने तत्परा बभूवुः। ततः श्रीत्परमानन्दपुरीसमीपं गत्वा प्रणम्य तन्नीलाचलगमनार्थमामन्त्र्य च काम कोट्याँ कृतमालानद्यामवगाह्य तत्र श्रीरामभक्तविप्रस्य जगज्जनन्याः सीताया राक्षसस्पर्शसम्बन्धिशङ्कां निरस्य कन्याकुमारी-

मवलोक्य मल्लारदेशसंन्यासिभट्टथारिकृतप्रवञ्चनेपतितं स्वसेवकं कृ
दासं ररक्ष च। ततश्च पयस्विन्यामवगाह्य श्री केशवं दृष्ट्वा तत्राऽपू
ब्रह्मसंहिताग्रन्थं प्राप्य पयोष्णीतुङ्ग-भद्रयोरवगाह्योडूपतीर्थे श्रीनर्त
गोपालं दृष्ट्वा प्रेमावेशे ननर्त च। तत्रत्यानां तत्त्ववादिविदुषां कर्मम
सिद्धान्तं विशोध्य श्रवणकीर्त्तनाख्यां भक्तिमेव साध्यसाधनतत्त्वे संस्था
फल्गु, विशाला, पञ्चास्परागोकर्ण, द्वैयायनी, सूर्पारक, कोलापुर पा
पुरादि तीर्थानि भ्रमन् तत्र श्रीमाधवेन्द्रपुरीशिष्यं श्रीरङ्गपुरीमवलो
प्रणम्य च तन्तुखात्म्वभ्रातुर्विश्वरूपाख्यस्यशङ्कराख्यस्य सिद्धिप्राप्ती
वार्तां शुश्राव। ततश्च भीमरथितीर्थे स्नात्वा विठ्ठलदेवदर्शनान्त
कृष्णावेण्वोपकण्ठेऽपराणिदेवमन्दिराणि संपश्यंस्तत्र पाठ्यमानं कृष्णप्रे
माधुर्यपूर्णं श्रीकृष्णकर्णामृतमपूर्वंग्रन्थं समुपलभ्य ताप्तितीर्थे स्नात
महिष्मतिधनुतीर्थे ऋष्यमुकादिदण्डकारण्ये सप्ततालमालिङ्गय तं सशरी
वैकुण्ठं प्रेष्य पम्पासरोवरेस्नात्वापञ्चवटीनासिकत्र्यम्बकब्रह्मगि
पथावलम्ब्य पुनश्च विद्यानगर्य्यामागत्य श्रीरायरामःनन्दाय पूर्वो
समुपलब्धौ ग्रन्थौ समर्प्य तं तोषयामास।

---

# एकोनत्रिंशत्तमः किरणः

# श्रीगौडीयवैष्णवदर्शनं तस्य वैशिष्ट्यञ्च

अस्मिन् भारतवर्षेऽनादिकालत उपास्योपासनाभेदेन नाना सिद्धान्तानां मतमतान्तराणां प्रदुर्भावः प्रचलतितराम् । एतेषां सर्वेषां मूलस्रोतो दर्शनशास्त्रमस्ति । जीवकल्याणकारिणस्तत्तत्सम्प्रदायानुयायिनः परमकारुणिका धर्मधुरन्धरा आचार्या एव विविधपरम्परापोषकाः सन्ति ।

**आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।**
**न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥**

(भा० ११/१७/२६)

एतत्सात्वतशास्त्रसिद्धान्तानुसारेण आचार्याः स्वयं भगवत्स्वरूपाः सन्ति । अतः स्वस्वपूर्वाचार्यप्रदर्शितमार्गानुसरणमेवेश्वरोन्मुखजीवानां परमं कर्त्तव्यमिति निश्चीयते ।

शास्त्राध्ययनानन्तरमस्मत्सम्मुखे श्रीवैष्णवसिद्धान्तस्य मननीया विचारा बलात्समुपतिष्ठन्ते । पूर्वाचार्या एतान् सिद्धान्तान् श्रुतिप्रतिपादित-महावाक्यानि ब्रह्मसूत्राणि च गभीरया धियाऽनुशीलयन्तो ब्रह्मजीवसम्ब-न्धिनीर्विविधा व्याख्याः प्रास्तुवन् । केवलाद्वैतवादानन्तरं विशिष्टाद्वैत शुद्धाद्वैत-द्वैताद्वैतानां तथाऽचिन्त्यभेदाभेदवादस्य च सिद्धान्ता अवनिजनि-जुषां भाग्यशालिजीवानां कल्याणहेतवे निरूपिताः ।

पूर्वोक्तसिद्धान्तसमूहप्रतिपादकाः क्रमशः--श्रीरामानुजाचार्याः श्रीमध्वा-चार्याः श्रीविष्णुस्वामिनः श्रीनिम्बार्काचार्यास्तथा श्रीमद् बलदेव विद्याभूषणाचार्याः स्वस्वसिद्धान्तानुसारं ब्रह्मसूत्राणां पृथक् पृथक् भाष्यं विरचितवन्तः । किन्तु श्रीगौडीयवैष्णवसिद्धान्तस्वरूपं ब्रह्मसूत्रस्याकृत्रिम-भाष्यं श्रीमद्भागवतमेव । श्रीगरुड़पुराणस्थेदं वचनं प्रामाणिकम् ।

**भाष्यं हि ब्रह्मसूत्राणां भारतार्थविनिर्णयः ।**
**गायत्री भाष्यरूपोऽसौ वेदार्थः परिबृंहितः ॥**

अस्यालोके एव श्रीगौड़ीयवैष्णवसिद्धान्तसंरक्षका आचार्यवर्य श्रीजीवगोस्वामिपादाः श्रीगौड़ीयवैष्णवदर्शनसम्बन्धि "षट्सन्दर्भ" नामकं विशालग्रन्थरत्नं रचितवन्तः । एतद्विषये श्रीमत्सनातनगोस्वामि

लिखितं "श्रीबृहद्भागवतामृतं" एवं "श्रीवैष्णवतोषिणी" टीका तथाऽऽचार्यश्रीविश्वनाथचक्रवर्तिपादानां "सारार्थदर्शिनी" टीका प्रमाणभूतास्तिष्ठन्ति। आचार्येण श्रीविश्वनाथचक्रवर्तिपादेन निर्णीतम्—

**आराध्यो भगवान् व्रजेशतनयस्तद्धामवृन्दावनम्,**
**रम्या काचिदुपासना व्रजवधूवर्गेण या कल्पिता।**
**श्रीमद्भागवतं प्रमाणममलं प्रेमा पुमर्थो महान्,**
**श्रीचैतन्यमहाप्रभोर्मतमिदं तत्रादरो नापरः ।।**

उपर्युक्तशास्त्रसिद्धान्तानुमोदितं चैतन्यमहाप्रभुनिर्देशसम्मतम्, श्रीगौड़ीयवैष्णवदर्शनवैशिष्ट्यं निम्नाङ्कितरूपेण निरूपितम् ।।

१—सर्वकारणकारणमनन्तशक्तिमान् अखिलरसामृतमूर्त्तिः स्वयं भगवान् व्रजेन्द्रनन्दनः श्रीकृष्ण एव परमोपास्यः। ब्रह्म तस्याङ्गकान्ति निर्विशेषस्वरूपमस्ति। परमात्मा-किञ्चित् सविशेषस्वरूपस्तस्यांशिकः प्रकाशः। षडैश्वर्यसम्पन्नो भगवान् नारायणस्तस्यैव (श्रीकृष्णस्यैव)। विलासमूर्तिरथवा, "पूर्णः" प्रकाशोऽस्ति तथा च—

**ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः।**
**अनादिरादिगोविन्दः सर्वकारणकारणः ।।**

(ब्रह्म संहिता ५-१)

२—श्रीकृष्णः स्वीयया तटस्थया जीवशक्त्या तथा बहिरङ्गया माया-शक्त्या, अनन्तब्रह्माण्डानां सृष्टिं रचयति। अन्तर्यामिपरमात्मरूपतया, ईशविमुखान् जीवान् अनित्येषु सुखदुःखेषु निमज्जयति। तथा च भाग्यवशादुदिते ईश्वरसाम्मुख्ये जीवान् प्रपञ्चेभ्यो मुक्तिमपि प्रददाति। इयमेव श्रीकृष्णस्य सृष्टिलीला।

३—सच्चिदानन्दविग्रहश्चिद्विलासिश्रीकृष्णः स्वां स्वरूपशक्तिमधिष्ठाय वैकुण्ठोपरि नित्ये गोलोकधाम्नि स्वयमेव मधुरप्रेम्णो विषयश्चाश्रयो भूत्वा नित्यकालं प्रेमरसस्यास्वादनलीलां—विदधाति। इयमेव श्रीकृष्णस्य 'चिन्मयी लीला" अस्ति।

४—प्राक्तनकर्मवशादीश्वरविमुखानामनादिकालतोऽपि मायाबद्धजीवानामुपरि कारुण्यसम्पादनाय स्वरूपशक्त्याश्रयेण भगवतः श्रीकृष्णस्य-श्रीराम नृसिंह-वाराह-वामनादयो लीला-वताराः, अस्मिन् प्रपञ्चे (श्रीकृष्णस्यैव) प्रकाशस्वरूपाः। तेषां विविधावताराणामवतारिश्रीकृष्णः प्रेम्णः

परिपूर्णतमो विषयः । एतच्चिन्मयलीलामाध्यमेन परिपूर्णतमो भगवान् श्रीकृष्णो भाग्यवतो जीवान् प्रेमदान द्वाराकृतार्थयति ।

५—श्रीकृष्णस्वरूपस्य वाच्यावतारस्वरूपायाश्चिन्मयाऽर्चामूर्तेः सेवनन्तथा तस्य वाचकावतारस्वरूपाणां चिन्मयानां नाम-रूप-गुणानामेव तस्य चिन्मयलीलाकथानामनुशीलनमेव श्रीकृष्णस्य प्रेमप्राप्तेरेकमात्र मुपायभूतमस्ति । ऐकान्तिकं श्रीकृष्णप्रेम एव हि जीवस्य परमः पुरुषार्थः । पुरुषार्थरूपेणाऽङ्गीकृतानि कर्म-ज्ञान-योग-साधनानि मुक्ति-सिद्ध्यादीनि साकल्येन न्यक्क्रियन्ते ।

६—परमार्थतो जीवः—स्वरूपतः परिपूर्णतमस्य भगवतः श्रीकृष्णस्य नित्यदासः । एवं श्रीकृष्ण एव जीवस्य नित्यप्रभुरस्ति । श्रीकृष्णस्य दास्य भक्तिरेव जीवस्य नित्यधर्मः । भुक्ति-भुक्ति-सिद्धि-ज्ञान-योग-साधनानि जीवस्य नैमित्तिकधर्ममात्राणि सन्ति । यतो हि—भाग्यवान् जीवो यावत् सद्गुरोः कृपया भगवतः श्रीकृष्णस्याहैतुकीं भक्तिं प्रति तीव्रेण वेगेन लालायितो न भवति तावत्तस्य मनसि भुक्तिमुक्त्याद्यवान्तरफलानां कामनाऽवशिष्यत एव । अतः भागवते सिद्धान्तितं यत्—यदाकदाचिदपि भगवान् स्वीयमैकान्तिकभक्ताय स्वयमेव भुक्तिं दित्सति तदा सः सर्वजन काम्यां कमनीयां चतुर्विधामपि मुक्तिमसकृन्निषेधयति । केनापि प्रकारेणा-प्यङ्गीकर्तुं सज्जो न भवति । उक्तञ्च श्रीमद्भागवते—

**सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।**
**दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥**

(भा० ३/२९/१३)

अतः श्रीगौडीयवैष्णवदर्शनसिद्धान्तानुसारेण भक्तेः समक्षं मुक्ति-रपि तुच्छतमा मन्यते । भक्तेर्लक्षणञ्च यथा—

**मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।**
**मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥**

(भा० ३/२९/११)

७—प्रपत्तियोगेन सहैव श्रीकृष्णानुरागिभक्तानां सत्सङ्गस्तथा च तेषां कृपया सर्वभूतेषु भगवतः श्रीकृष्णस्य सेव्यसेवकसम्बन्धानुभवः, निरभिमानतया दैन्यभावेन श्रीकृष्णस्य वाच्यचिन्मयार्चामूर्तेः परिचर्या तथा श्रीकृष्णस्य वाचकचिन्मयरूपाणां नामरूपगुणलीलानां श्रवणकीर्तना द्यनुशीलनमेवं प्रेमभक्तिप्राप्तेरेकमात्रं साधनानि संकल्पितानि । सद्गुरु

चरणाश्रितानां सौभाग्यवतां जीवानाञ्चैषामेव साधनानां परिपक्वावस्थायां श्रीकृष्णस्य प्रेममाधुर्यास्वादनमेव परमपुरुषार्थः ।

८—कलियुगपावनावतारी, महावदान्यशिरोमणिः, एवमुन्नतोज्ज्वल कृष्णप्रेमप्रदाता श्रीकृष्णचैतन्यमहाप्रभुः श्रीकृष्णनामसंकीर्त्तनयज्ञसाधनेन प्रेमभक्तिसाधनायाः प्रवर्तकोऽस्ति ।

९—वैधीरागानुगाभेदेन च भक्तिर्द्विविधा । अस्या भेदोपभेदा भक्तिसन्दर्भादिग्रन्थेषु सुविस्तरं वर्णिता द्रष्टव्याः । रागमार्गाश्रयिणां भक्तजनानां कृते श्रीकृष्णस्य व्रजपरिकरभूतानां गोपगोपीनामानुगत्येन समुपलब्धव्रजलीलानां श्रवणकीर्तनरूपानुशीलनमेव मधुरव्रजप्रेमप्राप्तेरेकमात्रोपाया निरूपिताः कृष्णभक्तिसाधनायाः पराकाष्ठा च ।

१०—श्री व्रजप्रेमसु शृङ्गार (मधुर) रसप्रधानयोः श्रीराधाकृष्ण युगलयोः प्रेम-सेवा स्वरूपस्य रसमाधुर्यस्य स्वरूपतः श्रीकृष्ण प्रेम प्रेयस्याः श्रीराधाराज्ञ्याः कैङ्कर्य्याभिमानेनास्वादनकरणमेव प्रयोजनमथवा पुरुषार्थ-पराकाष्ठा" वर्तते ।

अनेनैव राधाभावेन विभावितः श्रीकृष्णचन्द्र एव गौरचन्द्र (श्रीचैतन्य महाप्रभु) रूपेण कलियुगे नवद्वीपेऽवतीर्ण अनेनैव महाप्रभुणा लीलायाः शिक्षायाश्च माध्यमेन सर्वश्रेष्ठप्रेमसाधनस्याऽऽदर्शाः, भाग्यवतां जीवानां कल्याणाय करुवणया वितरिताः । एतद्विषये भक्तिरसाचार्यैः श्रीमद्रूप-गोस्वाममि प्रभुपादैः प्रतिपादितम्----

**अनर्पितचरीं चिरात्करुणयावतीर्णः कलौ**
**समर्पयितुमुन्नतोज्ज्वलरसां स्वभक्तिश्रियम् ।**
**हरिः पुरटसुन्दरद्युतिकदम्बसन्दीपितः**
**सदा हृदयकन्दरे स्फुरतु वः शचीनन्दनः ।।**

(विदग्धमाधवे-१।२)

अर्थात्—सत्यत्रेताद्वापरादियुगेषु, अन्यावतारमाध्यमेन यद् वस्तु नैवार्पितचरमभूत्तामेव स्वीयोज्ज्वलभक्तिरसरूपिणीं सम्पत्तिं सर्व-साधारणजनेभ्यो वितरितुं कलौ युगे सुवर्णादप्यधिक सुन्दरकान्तियुक्तो भूत्वाऽस्मिन्धरातले कृपयावतीर्णः श्रीशचीनन्दनो गौरहरिः श्रीमतां भवतां हृदयगुहास्वनवरतं स्फुरतुतराम् ।

अत्रेदमपि गौरवेण निर्देश्यमस्ति यत्--सद्गुरुचरणाश्रयपूर्वकं शब्दसङ्केतैर्वितीर्णया शिक्षयाऽनुप्राणितो मानवो वैयक्तिकजीवनादारभ्य राष्ट्रियजीवनपर्यन्तं कृतार्थतायाः पराभूमिकां यावत्, अञ्जसैवाऽधिरोढ़ु शक्यन्त इति । तथा च विश्वस्मिञ्जगति विश्वबन्धुत्वस्य शाश्वतप्रतिष्ठया सार्धमेव स्वस्था चिरकाम्या कमनीया शान्तिरपि स्थापयितुं शक्येति "श्री गौडीयवैष्णवदर्शनस्याऽऽस्थावानेवमाशावान् सनातनः सन्देश इति शम् ॥



# त्रिंशत्तमः किरणः

# "भगवद्भक्तिरेव एकमात्रमुत्तमं साधनम्"

अस्य दुस्तरसंसारसागरस्य पारं गन्तुं श्रीपरमेश्वरकृपातिरिक्तोऽन्यैकान्तिकोपायो नास्ति। अस्मिन्संसारे जड़वस्तुतः श्रेष्ठतमोऽपि जीवः स्वभावतो दुर्बलः पराधीनश्च तिष्ठति। केवलं भगवानेव जीवस्य नियन्ता पालयिता तथा रक्षकोऽस्ति। जीवः, "अणुचैतन्यविशिष्टः" अतः स्वभावतया परमचैतन्यस्येश्वरस्याधीनः सेवकश्चास्ति। परमचैतन्यस्वरूपो भगवानेव जीवसमूहस्याश्रयः। इदं जडजगत् मायया विनिर्मितम्। इदं जगत् कारावासतुल्यमस्ति। अस्मिञ्जगति जीवानामवस्थानं दण्डभोगिप्राणिसदृशमस्ति। भगवतो वैमुख्यवशादनादिकालतो जीवानां मायया सह सम्पर्को जातः। जीवानां कृते मायापाशादुद्धारोपायः केवलं भगवतः साम्मुख्योपलब्धिरेव। नान्यः कश्चन निस्तरणोपायः सङ्केतितः। भगवत्सम्पर्काद्बहिर्मुखा जीवाःसुदृढ-मायाबद्धोभवन्ति। ये च भगवतोऽनुगता जीवास्त एव मुक्ता अवतिष्ठन्ते।

बद्धजीवाः साधनबलेन भगवत्कृपां प्राप्यैव त्रिगुणमय्या मायारज्वाच्छेदने समर्था भवन्ति। तत्साधनोपलब्धये विचारपरायणा महर्षयः शास्त्रेषु कर्म-ज्ञान-भक्तिमयानि त्रीण्येव साधनानि निर्णीतवन्तः।

कर्मचर्चाविवेकः—वर्णाश्रमधर्मे। यज्ञस्तपोदानं तथा व्रतादिकमित्येतानि कर्मणो विविधान्यङ्गानि शास्त्रेषूल्लिखितानि सन्ति। तेषां कर्मणां फलान्यपि पृथक् पृथक् शास्त्रेषु वर्णितानि। तेषु कर्मफलसमूहेषु—स्वर्गभोगप्राप्तिः, मर्त्यलोकसुखप्राप्तिः, विविधैश्वर्यप्राप्तिः, महोच्चपद प्राप्तिरित्येतानि फलानि प्राधान्येन परिगणितानि जीवः कर्माचरणद्वारा, ऐहिकानामुष्मिकान् च यान् सुखभोगान् लभते, ते सर्वेऽपि नितरां नश्वराः। भगवतः कालचक्रेषु पिष्टाः, विनष्टप्रायाः, भवन्ति। निर्दिष्टानि कर्मणः सकलान्यपि फलानि मायाबन्धनानि नितरां द्रढयन्ति। तानि सुलभैः कर्मफलैर्नैव कदाचिदपि समूलं विनश्यन्ति। अपितु कालक्रमेण विकसन्तीभिः प्रतिक्षणं प्रवर्धमानवासनाभिर्मायायाः मूलमतितरां पुष्टिं प्रयाति। वस्तुतः, उच्चकर्मणां फलं यदि तदनुरूपं नैव सिध्यति तदा तानि फलान्यपि निरर्थकानि जायन्ते। उक्तञ्च श्रीमद्भागवते—

**धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।**
**नोत्पादयेद् यदि रतिं श्रम एव हि केवलम् ।।**

(भा० १/२/८)

अर्थात्—वर्णाश्रमधर्माणां यथावत्पालनानन्तरं यदि कस्यापि भगवत्कथादिषु रुचिर्नोत्पद्यते तदा तस्य धर्माचरणं साकल्येन निरर्थकमेवाव गन्तव्यम् । इति धर्मानुष्ठानस्य तात्पर्यभूतं फलं निर्भरश्रद्धायाः भक्तेश्चोद्गमरूपं वेद्यम् । श्लोके श्रम एव, हि केवलमिति चतुर्भिरपि पदैर्व्यज्यते यत् धर्मानुष्ठानस्य फलं भगवत्कथादिषूत्पद्यमानरुचिरेवास्ति । अन्यथा मनसि बोद्धव्यं यत् धर्मानुष्ठानपरम्परा विधिविधानसम्मता नैव समाचरिता, इति ।

ज्ञान प्रसङ्गः—साधनस्वरूपेण ज्ञानेन जीवः उच्चगतिं लभते, इति शास्त्रेषु बहुशश्चर्चितम् । ज्ञानस्य फलमात्मशुद्धिर्वर्तते । ज्ञानचर्चया जीवस्याऽऽत्मबोधो भवति । नाहं जडोऽस्मि, अहं चैतन्यस्वरूपः, आत्माऽस्मि । इदं ज्ञानं स्वभावतो नैष्कर्म्यनाम्नाऽभिहितं भवति । परं नैष्कर्म्यभावेन चिद्वस्तुनो नित्यसर्वशिवरसास्वादनं नैव सम्भवति । एतामवस्थामापन्नो जीव ,आत्मारामसंज्ञयाबोधितो भवति । किन्तु चिदास्वादनरूपा चित्-क्रिया यदाऽऽरभते तदा केवलं नैष्कर्म्यं स्थातुं नैव शक्नोति । अत एव भागवते देवर्षिणा नारदेन प्रत्यपादि—

**नैष्कर्म्यमप्यच्युतभाववर्जितम् ।**
**न शोभते ज्ञानमलं निरञ्जनम् ।।**

(भा० १/५/१२)

अर्थात्—नैष्कर्म्यरूपं निरञ्जनं ज्ञानं यदा अच्युतभावेन (भगवद्भक्त्या) विरहितं तिष्ठति तदा तस्य शोभा नैव भवति । अत्र सहजः प्रश्नः समुदेति तदा किं भवति ? भागवत एवोत्तरितम्— (भक्ति प्रसङ्गः)

**आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।**
**कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ।।**

(भा० १/७/१०)

अयम्भावः—परमचैतन्यो हरिः, स्वीयेनासाधारणगुणगणेन जड़तामुक्तआत्मारामभूमिकारूढं जीवं बलादाकृष्य निजभक्तिरूपकार्येषु

नियुनक्ति । परमभक्तवत्सलस्य भगवत इयमवाङ्मनसगोचरा महती करुणास्ति । इमामेव करुणामभिप्रेत्य भागवते सिद्धान्तितम्—

**न साधयति मां योगो न सांख्यं धर्म उद्धव ।**
**न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ।।**

(भा० ११/१४/२०)

अर्थात्—हे उद्धव ! समाचरितः कर्मयोग सांख्ययोगो वर्णाश्रम धर्मः वेदपाठो विधानसम्मतं तपश्चरणं वैराग्यं वा मां प्रसादयितुं नार्हन्ति । अहन्तु केवलतीव्रभक्तियोगेनैव परां प्रसादकोटिमुपयामि । तात्पर्यरूपेणेदं सिद्धान्तितम्,—यत् कर्मज्ञानादिसाधनेभ्यः प्रबलतरेण भक्तिसाधनेनैव भगवान् सर्वाधिकं प्रसाद्यते ।

अतः सर्वसाधनेभ्यः शुद्धभक्तिसाधनमेव सर्वोत्तमं साधनमस्तीति विज्ञापितं भवति ।



# एकत्रिंशत्तमः किरणः

## कविकुलगुरुकालिदासस्य प्रासंगिकता

**यद्यप्यन्यकवेः काव्येष्वन्यैरन्यैः सुशोभितम् ।**

**कालिदासस्य काव्यन्तु चोपमाभिरलङ्कृतम् ॥**

काल्याः दास इति कालिदासः "संज्ञायां ह्रस्वः"।

अर्थान्महामायायाश्चाद्यशक्त्याः उपासकः । अयं सरस्वत्याः वरदत्तपुत्र इति सर्वैर्विद्वद्भिर्ज्ञायते । अस्मिन्विषये विविधप्रान्ते विविधा किंवदन्ती श्रूयते । तस्याअनुसारेण विदर्भराजसुता विद्योत्तमा अनुपमसुन्दरी चातिशय विदुष्यासीत् । राज्ञा विदर्भेण तदनुरूपवरपात्रानुसन्धाने कोऽपि तदनुरूप योग्यो वरो नोपलब्धः । ये च वररूपेणागतास्तान् सा शास्त्रार्थे परास्ताञ्चकार । अन्तिमक्षणे राज्ञः सभापण्डिताः सर्वे चैवं मनःसु विचारितवन्तो यदनया सहैकमविद्वाँसं संयोजयिष्यामः । इति निश्चित्याज्ञं वरमन्वेषन्तोऽकस्माद् दूरतश्चैकं युवकं दृष्टवन्तो यो वृक्षस्याशाखामारुह्य तां कुठारेण कृन्तति स्म । तमज्ञपुरुषं तदर्थं सुयोग्यवरपात्रं मत्वा तं गृहीत्वा चोपराजमानीतवन्तः । विद्योत्तमा तु पूर्वानुरूपेण परीक्षणावसरे मौनमवलम्ब्य कूटमुद्रया तया ब्रह्मैकस्वरूपकाङ्गुलिः प्रदर्शिता । युवकेन तु ममैकाक्षिस्फोटयिष्यतीति मत्वा अहमस्याः अक्षिद्वयं स्फोटयिष्यामीति मनसि निधायाङ्गुलिद्वयं तस्या अग्रे प्रदर्शितम् । सा तु तत्त्वतो ब्रह्मातिरिक्तो द्वितीयजीव इति ज्ञात्वा तमुद्भटं विद्वांसं मत्वा च तमुपलभ्या स्वात्मानं गौरवान्वितं मेने । तेन सहोद्वाहान्ते दम्पत्योर्मिथः संलापावसरे निशायामकस्मादुष्ट्रध्वनिं श्रुत्वा कौतूहलवशात्को रौतीति पृष्टः सन्नज्ञस्तस्योत्तरे उष्ट्रस्थाने "उट्रः उट्रः" इत्यस्पष्टोच्चारणं कृतवान् । "तावच्चशोभते मूर्खो यावत्किञ्चिन्न भाषते" इति नीतिवचनेन तमज्ञं ज्ञात्वा वञ्चकान् पण्डितान्प्रति संक्रुध्य तमपमानपुरस्सरं गृहान्निष्कास्य कपाटं पिहितवती राजकुमारी । एवं पत्न्या तिरस्कृतः सोऽसह्यदुःखमनुभवन् विद्याप्राप्त्यर्थं सरस्वतीमुपगमिष्यामीति निश्चित्य चैकमार्गमवलम्ब्य दूराद् दूरं गच्छन् स मूर्खः करुणामय्या सरस्वत्याऽप्राक्षि—

"कि भोः ! त्वं कुत्र गच्छसि ?" इति श्रुत्वा खिन्नमनसा कालिदासेनोक्तमहं वञ्चिकया स्त्रिया सह वार्तालापं न करिष्यामि मामवरोद्धुं प्रयत्नं त्वं न कुरु । विद्याप्राप्त्यर्थमहं मातरं सरस्वतीं द्रष्टुं गच्छन्नस्मि । तस्य सरलप्रतिवचनेन संतुष्टया सरस्वत्या चोक्तमहन्तु सरस्वत्यस्मीति । तद्वचनं

श्रुत्वा प्रहर्षमनसा चार्द्रहृदयेन तेनोक्तं यदि त्वं विद्यादात्री सरस्वती भवसि तर्हि देहि मे विद्यां देहि मे विद्यामिति वारं वारं प्रलपन् तस्याश्चरणयोरपतत्। तया निगदितं सप्तजन्मावधि त्वयि विद्या ब्रह्मणा न लिखिता, कथं दास्यामि। तदुत्तरे कालिदासः साक्षात्सरस्वतीमवलोक्य चेत्थं कथितवान्। भो मातस्त्वयीदृशी शक्तिर्विद्यते मह्यमधुना सप्तवारं जन्मदातुं शक्नोसीति। तदुत्तरे सा वरदायिनी सरस्वती तं पुत्रं मत्वा सप्तवारं स्वोदरे निःक्षिप्य बहिर्निः सारितवती। अनन्तरं तन्मस्तकं स्वकरकमलाभ्यां परिमृशन्ती सा अवदत्।

"भोः पुत्र! विद्यां लभस्व, विद्योत्तमासमीपं च गच्छ। तया त्वमादरिष्यसे" इत्युपदेशमात्रेण जातेन विदुषा कालिदासेन झटिति स्तुतिः कृता।

कज्जलपूरित लोचनधारे[1] ,
स्तनयुगशोभितमुक्ताहारे ।
वीणापुस्तकरञ्जितहस्ते ,
जय हे भारति देवि नमस्ते ॥

ततः सरस्वती प्रसादाल्लब्धविद्यः कालिदासः परावृत्य निशामुखे भवनद्वारमवरुद्धं विलोक्य विद्योत्तमां प्रति "अनावृतकपाट द्वारं देहि" इत्यभाषत। तन्निशम्यतत्स्वरविशेषेण च समुपस्थित तं स्वपतिं" ज्ञात्वा सादरं प्रणिपत्य तयाभिहितम् "अस्ति कश्चिद्वाग्विशेषः ?" कालिदासेन आमित्युक्त्वा तस्याः वाक्ये घटित पदत्रयमवलम्ब्य अस्त्युत्तरस्यां दिशि, कश्चित्कान्ताविरहगुरुणा, वागर्थाविव संपृक्तौ इति श्लोकत्रयं झटिति विरचय्य तां श्रावयामास। पश्चात् इमान् त्रीन् श्लोकान् स्वरचितानां त्रिमहाकाव्यानां कुमारसम्भव-मेघदूत-रघुवंशानां क्रमशः आदिमश्लोकान् विदधे महाकविः कालिदासः ततः सानन्दीभूय सा तेन सह सुखेन समयमतिवाहितवती।

कविचक्रचूड़ामणिः कालिदासो भारतीय-संस्कृतसाहित्यस्य जाज्वल्यमानरत्नमासीत्। काव्यमर्मज्ञश्चैनं कवितकामिन्याः विलास इति ब्रुवन्ति, परन्तु रसस्यामृतस्रोतस्विन्याः भारतीयसंस्कृत्याश्चिरन्तनादर्शस्य कान्तासंमिताभिव्यक्तिप्रदायकस्यास्य सारस्वतकवेर्जीवनवृत्त-

(१) किंवदन्त्या सह चायं श्लोक उत्कलदेशे प्रसिद्धः।
अनेके कथयन्ति कालिदासस्यायमादिमश्लोक इति।

मद्यावधि कौतूहलपूर्णमेवमनुमानस्य विषयः सञ्जायते। अस्य कुत्र कस्मिन्कुले, कस्मिन्काले च जन्म, पितरौ च क्वौ इत्यादिकं सर्वं सन्देहास्पदं वर्तते यत एभिर्महानुभावैः कविभिः स्वग्रन्थेषु कोऽप्युल्लेखो न कृतोऽस्ति। नापि सत्यमैतिहासिकं तथ्यं मिलति। किन्तु विद्वद्भिः किंवदन्त्यनुमानाधारेण ईसवीयप्रथमशताब्द्याः पूर्वत आरभ्य ईसवीयाष्टमशताब्दीपर्यन्तकालखण्डे मतवैभिन्न्येन पृथक् पृथक् कालोऽस्य निर्धारितः। परन्तु ६३४ खिष्टाब्दस्य ऐहोल-शिलालेखे कालिदासस्य नामोल्लेखोऽस्ति अत एव कालिदासस्य समयः तत्पश्चात् मन्तुं न शक्यते। तदा प्राक् कियदवधि गन्तुं शक्नोतीत्यत्र विचारः कर्तव्योऽस्ति। स्वकीये मालविकाग्निमित्र नाटके कालिदासेन व्यलेखि—"प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं परिषदो बहुमानः"। अनेन सिध्यति यत् कालिदासः भाससौमिल्लादिभ्यः परवर्ती वर्तते। भाससौमिल्लौ ई० पू० तृतीये वा चतुर्थे शताब्दे जन्म लेभाते। अतो निश्चीयते यत् कालिदासेन ई० पू० प्रथमे वा द्वितीये शतके जन्म गृहीत्वा पीयूषवाहिन्यास्ववाण्या जगतीतलं समलंकृतं भवेत्। भारतीय जनश्रुतिः कालिदासं राज्ञा विक्रमादित्येन सम्बद्धं करोति। तद्यथा—कालिदासो महाराजविक्रमादित्यस्य सभायाः नवरत्नेष्वन्यतम आसीत्। विक्रमस्य नवरत्नानां नामानि इत्थं निर्दिष्टानि सन्ति—

**धन्वन्तरिक्षपणकामरसिंहशङ्कु,**
**वेतालभट्टघटकर्परकालिदासाः।**
**ख्यातो वराहमिहिरो नृपतेः सभायां,**
**रत्नानि वै वररुचिर्नव विक्रमस्य॥**

(ज्योतिर्विदाभरणम्(

कालिदासस्य विश्वविश्रुतस्य अभिज्ञानशाकुन्तलनाटकस्य प्रारम्भे सूत्रधार आगत्येदमुद्घोषयति—

"इयं हि रसभावविशेषदीक्षागुरोर्विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषद्। अस्याञ्च कालिदासग्रथितवस्तुना नवेनाभिज्ञानशाकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः"।

अर्थाद् यदद्य रसभावयोर्विशेषज्ञस्य महाराजविक्रमादित्यस्य सभायां श्रेष्ठाच्छ्रेष्ठतरविद्वांसः समुपस्थिताः सन्ति, अस्यां सभायां वयं कालिदासविरचितं नवीननाटकाभिज्ञानशाकुन्तलस्याभिनयं प्रस्तुतं

करिष्यामः। अतोऽस्मिन्विषये सन्देहावलेशो नास्तीति यदभिज्ञानशाकुन्तल-नाटकस्य रचना महाराजविक्रमादित्यस्य सभायामभिनयार्थमभवत्। पुनश्च कालिदासस्य नाटके विक्रमोर्वशीये विक्रमनाम्नः प्रयोग इदं सूचयति यद्विक्रमादित्येन साकं कालिदासस्यातिघनिष्ठसम्बन्ध आसीदिति। इत्थमेव अभिनन्दनकृते रामचरिते शकारिणा (विक्रमादित्येन) कालिदासस्य कृतयः प्रसिद्धि कृताः इति वर्णनं प्राप्यते[1]। राजाविक्रमादित्यः ई॰पू॰ प्रथम शताब्द्याम् उज्जयिन्यां राज्यं कुर्वन् निर्दिश्यते ऐतिहासिकैः। तेन कालिदासस्य अयमेव समयः (ई॰ पू॰ प्रथमशतके) निश्चीयते।

पाश्चात्यविदुषामनुसारेण विक्रमादित्यनामा कोऽपि राजा न बभूव। अपरविद्वद्भिरुक्तं विक्रमादित्य एको नहि परन्त्वनेके आसन्। कतिपयविदुषामतमिदं यद्विक्रमादित्य इति कस्यापि नाम नास्ति परमेकोपाधि-रासीत् यं कतिपयराजानो गृहीतवन्तः। ईसापूर्वं प्रथमशताब्द्यां विद्वद्भिः कैश्चिद्विक्रमादित्यमनुसन्धातुं प्रयासः कृतः। तेषामनुसारेण विक्रमादित्य एकः प्रजावत्सलस्तस्य राजधान्युज्जयिन्यासीत्। तेन च संग्रामे वैदेशिकाः शकाः परास्ताः कृताः। तदुपलक्ष्ये चैकः संवदद्ध्यावधि वैक्रमसंवद्रूपेण तन्नाम्ना प्रसिद्धोऽस्ति। इदमपि चान्येषां विदुषां मतमस्ति यद्विक्रम-संवत्सम्बन्धः केनापि विक्रमादित्येन राज्ञा नास्ति अपितु विक्रमकालस्येत्यर्थ-बोधकोऽयम्। विक्रमकालः स कालः कथ्यते यदा राजा शरत्काले विजयार्थं प्रस्थानमकरोत्। तत्कालमेव, पश्चाद्राज्ञा विक्रमादित्येन योजयित्वा संवत् प्रचालयामासुः विद्वांसः।

पाश्चात्यविद्वन्मतं शकान् भारताद्बहिः कर्तुर्विक्रमादित्यस्यो-पाधिधारिणो द्वितीयचन्द्रगुप्तस्य राज्यकाले कालिदासं मन्यते, यतस्तदा भारते चतुर्दिक्षु शान्तवायुमण्डलस्य भारतीयकलाकौशलस्य च पुनरुत्थानस्य काल आसीत्। रघुवंशकाव्ये वर्णितशान्तवायुमण्डलस्य समुचितसमयश्च चन्द्रगुप्तस्य समय एव आसीत्। अस्यातिरिक्तमिन्दुमत्याः स्वयंवरे समुपस्थितमगधनृपाय उपमा विशेषणं च—

"ज्योतिष्मती[2] चान्द्रमस्येव रात्रिः" "इन्दुं नवोत्थानमिवेन्दुमत्यै" इत्यादिषु चन्द्रद्योतकइन्दुशब्दस्य परिकल्पनात् चन्द्रगुप्तनाम्नो ध्वनि-प्रमाणेन ईसाब्द्याः ३७५ पंचसप्तत्युत्तरत्रिशत ४१३ त्रयोदशोत्तरचतु-शत ईसाब्दीपर्यन्तं कालिदासस्य समयं ज्ञापयति।

---

१. ख्यातिं कामपि कालिदासकृतयो नीता शकारातिना।

२. रघुवंशम् ६।२२। २—रघुवंशम् ६।३१।

परं मेकडानल महोदयेन हिस्ट्री आफ संस्कृत लिटरेचर नाम्नि पुस्तके गुप्तकाले कालिदासस्य स्थितिमनुपयुक्तां कथयन्निदमुक्तं यद्द्वितीय चन्द्रगुप्तोऽयमेव प्रथमविक्रमादित्यो नासीत्। परमस्मादपि प्राचीनतमस्य मालवादेशराज्यशासकविक्रमस्याप्यैतिहासिकं नाम प्रचलितं वर्तते तत्कथं कालिदासो गुप्तकाले भवितुं शक्यते मन्यते वा।

"स्मिथ" महोदयेन कथितं हालस्य गाथासप्तशत्यां दानशीलस्य विक्रमस्योल्लेखः [1]प्राप्यते यस्य स्थितिरीसाब्द्याः शतवर्षपूर्वमिति। अयं शकारिर्भवितुं कथञ्चिद्विप्रतिपत्तिर्नास्ति यत ईसाब्दयाः सार्द्धं शतवर्षं (१५०) प्रागेव शकानां परिचय इतिहासे प्राप्यते। सम्भाव्यतेऽयं विक्रमस्तेषां संहारकः स्यादिति। अतोऽस्य विक्रमस्य सभायां कालिदासस्य स्थिति भारतीयविद्द्भिः संकथ्यते[2]।

पाण्ड्यनरेशस्य वर्णनप्रसङ्गे रघुवंशषष्ठसर्गे कालिदासेन तस्य राजधानीमुरगपुरमिति[3] अथोरगाख्यस्य पुरस्य नाथमिति कथितम्। पाण्ड्यदेश नृपतीनां "उजियाउरः ईसाब्द्याः प्रथमशतके राजधान्यासीत्, तस्य संस्कृते चोरगपुरमिति कालिदासेन लिखितम् अनेन प्रमाणेन कालिदासस्य स्थिति- कालस्तस्मिन्समये ज्ञातो भवति।

अपरं चैतिहासिकस्य श्री शारदारञ्जनस्यमतानुसारं यदा बौद्धधर्म "प्राबल्येन वैदिकदेवतां प्रति तत्कालीनजनतायाः श्रद्धा विगलिता भवन्तदा कालिदासेनाभिज्ञानशाकुन्तलनाटकस्य नान्दीश्लोके "प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतुवस्ताभिरष्टाभिरीशः" इत्यत्र शङ्करस्याष्टमूर्तीनां वर्णनं कृत्वा प्रत्यक्षाभिः इति शब्दस्य प्रयोगे तत्कालीनवैदिकदेवताविषय काऽविश्वासस्य दूरीकरणाय संचेष्टितम्। तेन चोक्तं याः प्रत्यक्षरूपेण दृष्टिगोचराः भवन्ति ताः प्रति कथमविश्वासो भवितुमर्हति। अनेनाप्यभिज्ञानशाकुन्तलस्य षष्ठेऽङ्के तात्कालिकब्राह्मणानां कृते यज्ञयागादि करणं समुचितमिति कथितम्। तस्मिन्समये बौद्धधर्मावलम्बिनो हिंसापरकत्वाद्यज्ञस्यात्यधिकनिन्दां कुर्वेतउद्दिश्य शाकुन्तलस्यैकपात्रमुखेन "पशुमारण-कर्मदारुण अनुकम्पामृदुरेव श्रोत्रियः" इति कथितम्। अनेन ज्ञायते कालिदासस्तस्मिन्समये वौद्धधर्मस्य कारणात् यज्ञादिकविषये विद्यमाननिन्दाश्रद्धयोर्दूरीकरणार्थं प्रयत्नश्चकार।

१. सवाहन-सुख-रसतोषितेन ददता तव करे लाक्षाम्।
चरणेन विक्रमादित्यचरितमनुशिक्षितं तस्याः॥
२. आचार्यबलदेवोपाध्यायस्य मतानु सारं सी० वी० वैद्य महोदय-भण्डारकर संस्थानस्य प्रामाण्येन।
३ रघुवंश ६।५९।

अतः सिद्धान्तितं यद्विक्रमसंवत्प्रथमशतके कालिदासस्य प्रादुर्भाव समयो मान्यः समुचितो न्यायसंगतश्च प्रतीयते ।

एतस्य पुष्टिस्वरूपं वङ्गप्रान्तीयेन श्रीमता तारानाथतर्कवाचस्पति-भट्टाचार्यविद्वन्महोदयेन स्वकीय[1] वाचस्पत्यकोषे [कालिदासद्वारालिखित श्लोकानुद्धृत्य कालिदासशब्दस्य टिप्पण्यामिदं टङ्कितम् ।

यद्—

शङ्कवादिपण्डितवराः कवयस्त्वनेके,
ज्योतिर्विदः समभवंश्च वराहपूर्वाः ।
श्रीविक्रमस्य बुधसंसदि प्राज्यबुद्धे-
स्तैरप्यहं नयसखः किल कालिदासः ॥
काव्यत्रयं सुमतिकृद् रघुवंशपूर्वं,
जातं यतो ननु किलच्छ्रुतिर् कर्मवादः ।
ज्योतिर्विदाभरणकालविधानशास्त्रं ,
श्रीकालिदासकवितो हि ततो बभूव ।
वर्षे सिन्धुरदर्शनाम्बरगुणैर्याते कलेः संस्थिते,
मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः ॥

इतिचाऽनेन ३०६८ अष्टषष्ठ्युत्तरत्रिसहस्रसंख्यके कलेरब्दवृन्दे याते तदुपग्रन्थकरणं सुव्यक्तम् । एतस्याधारशिलां गृहीत्वा ऽस्मन्मतेन भारतीयज्योतिर्विदाभरणानुसारं साम्प्रतं कलेर्गताब्दाः ५०९९ एकोनशतोत्तरपञ्चसहस्रसंख्यका भवन्ति । तेषु निर्दिष्टेषु ३०६८ संख्याऽतीतेषु २०३१ एकत्रिंशदुत्तरद्विसहस्राब्दाः समायान्ति । तेन इतः २०३१ वर्ष-गणनात्पूर्वं कालिदासकथितज्योतिर्विदाभरणं विरचितं ततः पूर्वं रघु-वंशादिकं समभूदिति प्रतिभाति ।

अतएव एकत्रिंशदुत्तरद्विसहस्राब्द (२०३१) पूर्वं कालिदासस्योत्पत्तिकाल-गणनं न्यायसंगतम् । यतः स्वयं कालिदासेनोररीकृतम् ।

---

१. प्रयागस्थश्रीशिवशर्मासंस्कृतमहाविद्यालये महामहोपाध्याय पं० आदित्यराम 'भट्टाचार्य द्वारा स्थापित श्री धन्यगोपीपुस्तकालये सुरक्षितकोषे ।''

२. स्मृतिचन्द्रिकाभिध उत्कलदेशप्रचलितो वेदोक्तकर्मप्रतिपादकप्रबन्धो, ज्योतिर्विदाभरणनामकं कालज्ञानशास्त्रं च क्रमेण निरमायि, इति-वाचस्पत्ये ।

**कालिदासस्य रचनाशैली**

कालिदासस्य कृतिषु संस्कृतकाव्यशैल्याश्चारुतमरूपं प्रस्फुटितं बभूव। तस्य कवितानां यैर्गुणैः संसारस्तस्य भक्तोऽभवत् तेषु तस्य मौलिकताऽद्वितीया एव। तेन स्वविषयान् प्राचीनाख्यानेभ्यो गृहीत्वा कथंकारं स्वसृष्टिनैपुण्येन नीरसविषयाणां सर्वप्रसिद्धकथानकानां च सुरुचिर्मुग्धकारिणी च रचना व्यधायि। मौलिकता नवीनसृष्टिकरणे तादृशी न हि भवति यादृशी तु पुरातनसृष्टये नवीनचमत्कारप्रदाने भवति। कालिदासस्य सर्वतोमुखी प्रतिभा तस्मै विश्वसाहित्येऽसाधारणस्थानं दापयति। तेन महाकाव्यगीतिकाव्यदृश्यकाव्यादिसर्वरचनाभिः स्वप्रखरप्रतिभायाः समानरूपेण परिचयः प्रदत्तः। अतएव कोऽपि कविस्तेन समतां कर्तुं न शशाक। पाश्चात्यकविषु 'शेक्सपियर नामाख्यः' कविर्बाह्यनैपुण्ये पात्रचरित्रचित्रणे च तत्सम इति केचन ब्रुवन्ति, परं भारतीयादर्शानुसारं काव्यस्यान्तरात्मा रस एव भवति। तस्य रसस्य यादृशी पूर्णाभिव्यक्तिः कालिदासेन स्वकाव्येषु प्रदर्शिता तादृशी चान्यत्र सुदुर्लभाऽस्ति। कालिदासस्य लोकप्रियतायाः प्रधानकारणं तस्य प्रसादपूर्णलालित्ययुक्तसुपरिष्कृतशैल्येव। तेन स्वरचितग्रन्थाः, वैदर्भीरीतिषु लिखिताः। महाकविदण्डिना वैदर्भीरीत्याः सर्वश्रेष्ठरचनाकारः कालिदास एव स्वीकृतः—"वैदर्भीरीतिसन्दर्भे कालिदासो विशिष्यते"। कथनं चास्ति—

**यस्य वश्या गिरो लिप्ता मधुनेव सुमध्यमे।**
**तेनेदं वर्त्मवैदर्भं कालिदासेन शोधितम्॥**

लालित्यपदविन्यासस्य माधुर्य्येण क्लिष्टकृत्रिमतायाः सर्वथा परिहारेण च कालिदासस्य रचनाः सर्वथा स्वाभाविक्यः सहजाः सरलसुबोधप्रसादयुक्ता एव सन्ति। कस्यचिद्भावस्य चित्रणसमये स एकापूर्वशैल्या उपयोगमकरोत्। अभिधापेक्षया व्यञ्जनावृत्तिमाश्रित्य सूक्ष्मसंकेतेन कथनं पर्याप्तबोधकरं जातम्।

यदा महर्षिरङ्गिरा गिरिराजहिमालयं श्रीशिवनिमित्तं पार्वतीमयाचत तदा पार्श्वस्थितपार्वत्या मानसिकदशाया वर्णनं कालिदासेन पद्मपत्रगणनायां पार्वत्याः प्रवृत्तेरत्यधिकं रुचिकरं मार्मिकं कृतम्।

**एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।**
**लीला कमलपत्राणि गणयामास पार्वती॥**

अस्य कवित्ररस्येदृक्शब्दलाघववर्णनं तस्य कलात्मकाभिरुचेः परिचायकमस्ति। तस्य कल्पना नित्यनूतनचित्रस्य सृष्टिकरणे निपुण रसमयी। तस्य रुचिकररचनासु "क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः," इति

लोकोक्तिः पूर्णतया चरितार्था भवति। अपि च कोमल-सुकुमारभावस्य व्यञ्जनायां कालिदासोऽद्वितीयोऽस्ति। शृङ्गाररसस्य सम्भोगविप्रलम्भयोरुभयपक्षयोर्वर्णनं कालिदास इवास्मिन्संसारे कश्चिदन्य कविः नाकरोत्। यथा कुमारसम्भवस्य रतिविलापः, रघुवंशस्याऽज विलापश्च तस्य करुणरसस्य सर्वोत्कृष्टउदाहरणेऽस्तः। पत्युर्भस्मीभूत शरीरं दृष्ट्वा विलपन्ती रतिर्निवेदयति—

**१—गत एव न ते निवर्तते स सखा दीप इवानिलाहतः।**

**२—अहमेव दशेव पश्य मामविषह्यव्यसनेन धूमिताम्॥**

हे वसन्त! तव प्रियसखा मन्मथो वायुरंहसा निर्वाणप्रदीपनिभः कदापि पुनर्न निर्वर्तितुमचलत्। पश्य च मां तन्निर्वाणदीपस्य कृष्णवर्तिका समासह्य शोकान्धकारेणाऽऽवृतावशेषमात्रमहम्।

तथैव रघुवंशे पत्न्या वियोगेऽजस्येदृशी दशाऽभवत्।

**३—विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्।**

**अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु॥**

यदा पार्वती दर्पणेन सुदीर्घनेत्राभ्यां स्वस्य रमणीयरूपमपश्यत्तदा शीघ्रतया शिवसामीप्यप्राप्त्यर्थमातुरा बभूव। यतः स्त्रीणां लावण्यस्य साफल्यं प्रियतमस्य स्नेहसिक्तावलोकने एव निहितमस्ति।

यतो हि—

**आत्मानमालोक्य[2] च शोभमानमादर्शबिम्बे स्तिमितायताक्षी।**

**हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः॥**

करुणशृङ्गाररसयोर्व्यञ्जनायां कवेः पद्यानां नादसौन्दर्यं सुकुमार वर्णविन्यासे चातिशयं सहायकमभूत्। तथालङ्काराणां प्रयोगे कविवरेण-स्वकीयसूक्ष्ममर्मज्ञतायाः परिचयः प्रदत्तः तस्य कविता अनपेक्षितालङ्कार भारैराक्रान्ताकामिनीनिभा मदमन्थरगत्या प्रचलन्ती न भवति। परं स्फुटचन्द्रतारका विभावरी' तुल्या निजसहजसौन्दर्यैः सहृदयचित्तानि आकर्षन्तीव विलसति। अनुप्रासाः स्वत एव तस्य काव्येष्वागताः "प्रजाः

---

१—कुमारसम्भवम् ४/३०। २—अहमस्य। ३—रघुवंशम् ८/४३।
२—कुमारसम्भवम् ७।२२।

प्रजानाथ जितेव भासि" माधुरी मदयति मार्जना मनांसि"। यमकालङ्कारः रसभङ्गाशङ्कया कविवरेणाऽस्य क्वचिदेव प्रयोगः कृतः। यथाहि—

"वधाय वध्यस्य शरं शरण्यः" "मनुष्यवाचा मनुवंशकेतुरिति"। सुन्दरोत्प्रेक्षाया उदाहरणं मेघदूत-काव्ये पूर्णरूपेणास्ति। दृष्टान्तोऽपि कवेः प्रियालङ्कार आसीत्। कालिदासेन निजाद्भुतकल्पनाशक्त्या विशेष सौन्दर्यदृष्ट्या च स्वशब्दचित्राणामुत्स आकारितः। अयं मानवहृदयस्य कोमलभावानां तस्य विविधभावावेशानां च सत्यसम्प्रेक्षक आसीत्। प्रकृतेर्गूढ़रहस्यानां तस्यानुपमदृश्यानां च सच्चित्रणं कालिदासस्य काव्येषु सर्वत्रैव मिलति, यतश्चरितचित्रणेऽप्ययमद्वितीयोऽस्ति। दीपशिखातुल्येन्दुमतिः, कृशाङ्गयष्टिसमा सीता, मनोज्ञवल्कलेनापि तन्वीशकुन्तला, एतासां सजीवचित्राणि चास्माकं पुरतः समुपस्थितानि भवन्ति।

एतदतिरिक्तं कालिदासस्य रचनासु कुत्रचिदश्लीलताच्युतसंस्कृत्यौचित्यभङ्गस्तथा रसदोषस्य कणिका अपि प्राप्यते चेत् तर्हि एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः इति तस्यैव सुभाषितेन मार्जनीयोपेक्षणीया च।

इयमपि किं वदन्ती वर्तते यत् कालिदासेन कदाचित् सिंहलद्वीपस्थनृपकुमारदास-विरचितं जानकीहरणमहाकाव्यं बहुप्रशंसितम्। इदं श्रुत्वा सः महाकविप्रवरं कालिदासं स्वसमीपे आगन्तुं बहुसम्मानेन सह निमन्त्रयामास तत्राऽनेन महाकविना सिंहलद्वीपनृपस्यानन्यप्रियपात्रस्यै कस्या दास्या गृहं गत्वा तत्र लिखितं श्लोकार्द्धं—

'कमले कमलोत्पत्तिः श्रूयते न तु दृश्यते'

इति दृष्ट्वाऽनेन तच्छ्लोकस्य—

"बाले! तव मुखाम्भोजे कथमिन्दीवरद्वयम्?"

इति पूर्तिः कृता। ईर्ष्यावशतस्तस्या हस्तेनैवायं पञ्चत्वं प्राप्तः। परमियं किंवदन्ती भारतेषु कुत्रापि प्रचलिता नास्ति। यदि चेदभूदेव, सः कुमारसम्भवरघुवंशमेघदूताभिज्ञानशाकुन्तलग्रन्थानां रचयिता कालिदासो न हि कोऽप्यपरः कालिदासः सम्भवेदिति शम्।

———

# द्वात्रिंशत्तमः किरणः

## महाकविभवभूतेः प्रासंगिकता

संस्कृत-साहित्यस्य नाटककारेषु महाकविभवभूतेर्नाम कविकुलगुरु कालिदासानन्तरमेव श्रद्धया सर्वविद्वद्भिर्गृह्यते। अस्य महाकवेः नाटकस्य प्रस्तावनातोऽयं परिचयः प्राप्यते यदयं [1]विदर्भदेशस्य पद्मपुरनामक नगर्यां निवास्यासीत्। उदुम्बरवंशीयवैदिकब्राह्मण परिवारेऽयंजन्म अलभत। अयं कृष्णयजुर्वेदस्य तैत्तिरीयशाखाध्यायी वेदवेदाङ्गदर्शनादिशास्त्रज्ञाता, सोमयाजी याज्ञिकश्चासीत्। अस्य पितृनाम नीलकण्ठो मातृनाम जातुकर्णी पितामहस्य नाम भट्टगोपाल इति। यथोत्तररामचरिते सूत्रधारेणोक्तम्।

"अस्ति खलु तत्र भवान् काश्यपश्रीकण्ठपदलाञ्छनः पदवाक्य प्रमाणज्ञो भवभूतिर्नाम जातुकर्णीपुत्रः"।

कतिपयविदुषांमतमस्ति यदनेन श्लोकद्वयेन स्वनाम्नः परिचयो दीयते।

**१—"साम्बा पुनातु भवभूतिपवित्र मूर्त्तिः"**

**२—"गिरिजायाः कुचौ वन्दे भवभूतिसिताननौ'**

ऐतिहासिकाधारे भवभूतिकृतमालतीमाधवनाटकस्यैकस्यां चतुःशत (४००) वर्षप्राचीनहस्तलिखितपुस्तिकायां भवभूतिनाम प्रसिद्धमीमांसकस्य कुमारिलभट्टस्य शिष्यरूपेणोल्लिखितं वर्तते, यस्य चापरं नाम उम्बेकाचार्योऽपि कथ्यते।

स्थितिकाल :—

अस्य स्थितिकालसम्बन्धे सुनिश्चितप्रमाणोपलब्धिः वर्तते। ईसवीयैकादश (११००) शताब्द्यां मम्मटस्य, ई० पंचनवत्युत्तरनवशत (९९५) शताब्द्यां धनञ्जयस्य, ई० एकोनषष्ट्युत्तरनवशत (९५९) शताब्द्यां सोमदेवस्य रचनासु महाकविभवभूतेर्ग्रन्थादुद्धरणं प्राप्यते। ई० नवशत (९००) शताब्द्यां राजशेखरः स्वात्मानं भवभूतेरवतारमपि कथितवात्। यथा हि—

**"बभूव वल्मीक भवः कविः पुरा ततः प्रपेदे भुविभर्तृमेण्ठताम्।**
**स्थितिः पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखरः॥**

ई० अष्टशत (८००) शताब्द्यां वामनेन स्वकीयकाव्यालङ्कार-सूत्रवृत्तिग्रन्थे भवभूतिकृतस्य "इयं गेहे लक्ष्मीः" पद्यस्योद्धृतकरणात् भवभूतेः

१—अधुना वरारं इति मध्यप्रदेशे वर्तते।

स्थितिकालः प्रायः, ई० पंचाशदुत्तरसप्तशत (७५०) तमे वर्षे सिद्धो भवति ।

अन्यप्रमाणेनापि महाकविबाणभट्टेन स्वकीये हर्षचरिते भासकालिदासाभ्यां सह भवभूतेर्नामोल्लेखनं कृतम् । बाणस्य समयः सप्तशताब्द्याः पूर्वार्द्धमासीत्, अतो भवभूतेः समयसीमा बाणस्य समयस्योपरि ई० पंचाशदुत्तरषष्ठशताब्द्याः (६५०) पंचाशदुत्तरसप्तशताब्द्याः (७५०) मध्ये सम्भवेत् ।

महाकविकल्हणेन स्वकृतराजतरङ्गिण्यां ११४८ ईसाब्द्यां भवभूतिं कान्यकुब्जनृपस्य यशोवर्मण आश्रितकविरूपेण मन्यते तथाहि—

**कविर्वाक्पतिराजश्रीभवभूत्यादि सेवितः ।**
**जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ।।**

एतेषु प्रमाणेष्वाधारभूतेष्विदं कथनं भवितुमर्हति यतो भवभूतिः सप्तशतईसाब्द्याः (७००) सन्निकटं समजनीति ।

**संरचना:**—

भवभूतेस्त्रीणि नाटकानि समुपलब्धानि । यानि महावीरचरितमालतीमाधवोत्तररामचरितानि चेति प्रसिद्धानि । एतेषामतिरिक्तं शार्ङ्गधरपद्धतिः, रसिकजीवनं नं चेति प्राचीनसूक्ति-संग्रहेषु तन्नामतः कतिपयपद्यानि प्राप्यन्ते । तस्य नाटकानामभिनयो भगवतः कालप्रियनाथस्योत्सवावसरेऽभवदिति तेषां प्रस्तावनातो ज्ञातो भवति ।

विदुषांमतमस्ति उज्जयिन्या महाकालमहादेवस्यैवाऽपरं नाम कालप्रियनाथो वर्तते । अपि च महावीरचरितमालतीमाधवनाटकयोः प्रस्तावनाभ्यां ज्ञायते महाकविभवभूतेर्नटैः सहातिशयघनिष्ठमित्रता आसीत् । अतः स्पष्टमिदं वर्तते यत् भवभूतिना स्वनाटकानि अभिनयार्थमेव लिखितानि ।

तेषां नाटकानां मध्ये प्रथमनाटकं महावीरचरितं विद्यते । यस्मिन् सप्ताङ्केषु रामायणस्य पूर्वार्द्धस्य रामोद्वाहस्तद्वनवाससीताहरणराज्याभिषेकाणां कथा वर्णिताऽस्ति । अनेन परिलक्षितं भवति यत् महाकवेर्भगवन्तं रामं प्रति प्रगाढानुराग आसीदिति । यतोहि यस्मिन्मनसि या भावना वर्तते सा वाण्याकारेण परिस्फुटति ।

द्वितीयं मालतीमाधवनाटकं दशाङ्कानां प्रकरणं, वर्तते, यस्मिन्मालतीमाधवयोः प्रेम्णो वैवाहिकी कल्पना चित्रितास्ति । पद्मावतीनरेशो भूरिवसुः स्वपुत्र्या मालत्या विवाहं स्वस्य बालपकालिकमित्रदेवरातस्य

पुत्रेण माधवेन सह कर्तुमिच्छति । इतो नृपस्य नर्मसुहृदः पुत्रो नन्दनो मालत्या सह विवाहं कर्तुमिच्छति । यस्मिन् नन्दनस्य समर्थको माधवस्य सखा मकरन्दो वर्तते । तथा मालत्याः सखी मदयन्तिका नन्दनस्य भगिन्यस्ति । मालतीमाधवौ एकस्मिन् शिवमन्दिरे परस्परं मिलतः । तत्रैव मकरन्दो मदयन्तिकामेकस्मात् व्याघ्राद्रक्षां करोति । तत्र मालतीमाधवौ परस्परं प्रेमपाशेनाबद्धौ भवतः इत्यादि काल्पनिककथापूर्णनाटकं विद्यते । अस्य नाटकस्य रचना महाकवेर्भासस्य, अविमारकनाटकात्प्रभाविता ऽस्तीति ज्ञातं भवति । महावीरचरितनाटकापेक्षयाऽस्मिन् मालतीमाधव-नाटके कवेः प्रतिभाया अधिकतमो विकासः परिलक्ष्यते । भाषाशैल्यामपि यथावसरं - सरलता - सरसता - सजीवतानां समावेशो दर्शनीयोऽस्ति । पतिपत्न्योरादर्शसम्बन्धस्य सुन्दरं वर्णनमनेन प्रकारेण तेन कृतं यतो हि—

**प्रियं मित्रं बन्धुता वा समग्रा सर्वे कामाः शेवधिर्जीवितं वा ।**
**स्त्रीणांभर्त्ताधर्मदाराश्च पुंसामित्यन्योऽन्यं वत्स यो ज्ञातिरस्तु ॥**

अर्थात् हे वत्स ! उत्तमरूपेण तव ज्ञानं भवेद्यत् स्त्रियै तत्पतिः पत्न्यै तद्विवाहिता पत्नी चोभयोरन्योन्यं परमप्रियमैत्री सर्वाधिकः सम्बन्धोऽस्ति । अयं सम्बन्धः पूर्णाभिलाषाणां सर्वाधिकनिधिरधिकन्तु किं स्वयं जीवनमपि वर्तते ।

तृतीयमुत्तररामचरितं भवभूतेरन्तिमं सर्वोत्कृष्टं नाटकमस्ति । यस्य च तेन सप्ताङ्केषु विभाजनं कृतम् ।

एतस्य प्रथमाङ्के रामस्य राज्याभिषेकानन्तरं श्रीमज्जनकस्य गृहं प्रत्यावर्तनान्ते, उदासीनां सीतां रामः सान्त्वयितुं तामुपगतः तत्र । रामाज्ञया लक्ष्मणः रामलक्ष्मणसीतानां पूर्वचरित्राङ्कितानि चित्राणि पर्यदर्शयत् । जनकनन्दिनी सीता पुनर्भगवत्यां भागीरथ्यामवगाहनार्थ-मभिलाषं प्रकटयति । चित्रदर्शनजनितश्रमेण क्लान्ता भूत्वा शयनं करोति । ततो रामो दुर्मुखनाम्नो गुप्तचरमुखात् सीतायाश्चरित्रसम्बन्धिलोका-पवादं श्रुत्वा मर्मान्तकपीडया पीडितः सन् तां (सीतां) परित्यक्तु-मिच्छति स्म । भागीरथीदर्शनेच्छुकीं सीतां तदिच्छापूर्तिव्याजेन तेन सा निर्वासिता भवति ।

द्वादशवर्षव्यतीतानन्तरं द्वितीयाङ्कस्य कथा ग्रन्थकर्त्रा प्रारभ्यते । अस्मिन्नङ्के तपस्विन्यात्रेयीवनदेवतावासन्त्योः संवादेन ज्ञायते यद्रामचन्द्रेणा-श्वमेधयज्ञस्य प्रारम्भः क्रियते । एकया देव्या समर्पितौ द्वौ सुन्दरौ

कुशाग्रबुद्धिबालकौ महर्षिवाल्मीकिना परिपाल्येते। रामचन्द्रो दण्डकारण्ये प्रविश्य शूद्रतपस्विनं शम्बूकं जघान।

तृतीयाङ्के तमसामुरलानद्योः सम्भाषणेन ज्ञातं भवति यत्सीता स्वजीवनान्तं कर्तुं भागीरथ्यां चुकुर्द। तत्सलिले लवकुशयोःप्रादुर्भावोऽभवत्। भागीरथ्या तस्या बालकौ, संरक्षणार्थं वाल्मीकिऋषये समर्पितौ।

ततः सीतायाः प्रतिच्छाया सीतारूपेण प्रकटिता भवति। परं रामः तां द्रष्टुमक्षमो भवति। स्वपुरातनं क्रीडास्थलं परिप्रेक्ष्य रामो मूर्च्छितः सन् सीतायाः करस्पर्शेन उद्बुद्धो भवति। सीताशोकेन प्रमुक्तकण्ठस्तत्र रामो विललाप।

चतुर्थाङ्के कौशल्याजनकौ मिथः सान्त्वनां प्रयच्छतः। तस्मिन्वाल्मीक्याश्रमे कतिपयबालकाःक्रीडनं कुर्दनं च कुर्वन्तः तत्समीपमायान्ति। तेष्वेको लवनामा कान्तिमान् बालको रामस्याश्वमेधस्य घोटकं जग्राह।

पञ्चमाङ्के यज्ञीयाश्वस्य रक्षकेण चन्द्रकेतुना सह लवस्य दर्पयुक्तं कथोपकथनं भवति परं क्षणानन्तरं परस्परानुरागोऽपि भवति।

षष्ठेऽङ्के द्वयोर्वीरयोर्युद्धस्य वर्णनम् एकेन विद्याधरेण स्वपत्न्या सह संबादः क्रियते। तत्र श्रीमद्रामस्यागमनात् युद्धस्य विरामो भवति। तस्य हृदये लवकुशौ प्रति नैसर्गिकी स्नेहभावना संचरति, परं स तौ पुत्ररूपेण न परिचिनोति, आकृत्या तु सीतायाः पुत्राविति सम्भावनां कुरुते।

सप्तमाङ्के कविना एकदिव्यनाटकस्याभिनयः कारितः। अस्मिन्नभिनये परित्यक्ता सीता भागीरथ्यां चुकुर्द, परमेकमेकं शिशुं क्रोडे कृत्वा भागीरथीपृथिवी च तां सीतां सलिलाद्बहिर्निष्काशयन्त्यौ प्रकटिते भवतः। पृथिवी रामस्य कठोरतां निनिन्द। गङ्गा च तस्य कारणं कथयतिस्म। पृथ्वीगङ्गाभ्यां सीता आदिष्टा-त्वमिमौ शिशू तावत्पालय यावदिमौ बाल्मीकिमुनेः संरक्षणे किशोरौ न भवेताम्।

इदं दृश्यमवलोक्य तत्त्वतो रामेण शोकाग्निना मूर्च्छितस्ततोऽकस्मादरुन्धती सीतां गृहीत्वा प्रकटिताबभूव। सीता च स्वामिनं स्वकरस्पर्शेन स्वस्थमकरोत्। वाल्मीकिनाऽपि तत्पुत्रौ लवकुशौ समर्पितौ। अनेन प्रकारेण महाकविभवभूतिना नाटकाय माधुर्यमपि प्रदत्तम्।

**अस्य नाटकस्य मूलं तथ्यम्—**

१—उत्तररामचरितनाटकस्याधारशिला रामायणस्योत्तरकाण्डो-

ऽस्ति । परं भवभूतिना नाटकीयस्वरूपप्रदानार्थं मूलकथायां मौलिक-परिवर्तनं कृतम् । यथा हि—चित्रदर्शनदृश्यम्, श्रीरामचन्द्रस्य वनदेवता वासन्त्या सह मिलनम्, दण्डकारण्ये छायासीतायाः समुपस्थितिः बाल्मीक्याश्रमे जनककौशल्यावशिष्ठारुन्धत्यादीनामागमनम्, तथा च सप्तमाङ्के गर्भाङ्कनाटकादीनि महाकवेर्मौलिकी कल्पना वर्तते ।

२—रामायणापेक्षया पद्मपुराणस्य पातालखण्डीय-रामकथा-घटनासु तथा उत्तररामचरितस्य चतुर्थपञ्चमषष्ठाङ्कानां घटनासु किञ्चिदधिकं साम्यं प्राप्यते । अस्याधारेणोत्तररामचरितकथानकस्य मूलस्रोतः डॉ० वेलवेल्कर महोदयेन पद्मपुराणमेव मन्यते ।

**उत्तररामचरितनाटकस्य वैशिष्ट्यम्**

उत्तररामचरितं सर्वसम्मतया महाकविभवभूतेः कल्पितकलायाश्चूडान्तनिदर्शनं वर्तते । "उत्तरे रामचरिते भवभूतिर्विशिष्यते" एतस्योत्कृष्टनाट्य कलाया हृदयङ्गमार्थमुत्तररामचरितमेवालोच्य विषयोऽस्ति ।

१—प्रथमाङ्कस्य प्रस्तावनायामेव नटस्य मुखेन ",सर्वथा ऋषयो देवाश्च श्रेयो विधास्यन्ति" इदं कथयित्वा नाटकस्य सुखान्तत्वं कविना सङ्केतितम् । २—भारतीयनाट्यकलाया आदर्शानुसारं दुःखान्तं वर्जयित्वा नाटकान्ते नायिकानायकयोः सीतारामयोः सम्मेलनं कारयित्वा नाटकस्य सुखान्तरूपमेव दर्शितं कविना ।

अनया प्रस्तावनया ज्ञायते सीतायाश्चारित्र्यविषये प्रजाजनेषु सन्देहः प्रसरिष्यति, तत्प्रागेव रामोऽपीदं प्रवादं शृणोतु इति कविना दर्शकाः कतिपयावश्यकविषयैः परिचिताः कारिताः यतो हि—स्वयं रामः सीतायाः चारित्र्ये पूर्णविश्वस्तोऽपि केवलं प्रजारंजनाय लोकोत्तरकर्त्तव्य-परायणतायाः परिपालनं करिष्यति । रामस्य वचनमिदम्—

**स्नेहं दयाञ्च सौख्यञ्च यदि वा जानकीमपि ।**
**आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥**

( उ० रा० च० १/१२)

प्रथमाङ्के चित्रदर्शन-दृश्ये सीतात्यागानन्तरं श्रीरामः कथं शोकाकुलो भविष्यति, अस्यपूर्वाभासो मिलति । यथा लक्ष्मणेनोक्तम्—

**सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मि-**

**न्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।**

**सतो रामेण—त्रत्सैतस्माद्विरम विरमातः परं न क्षमोऽस्मि ।**

**प्रत्यावृत्तः स पुनरिव मे जानकीविप्रयोगः ।।**

(उ० रा० च० १/३३)

अस्य तृतीयाङ्कं पठित्वाऽनेकालोचकाः कथयन्ति, यदस्मिन् नाटकीयक्रियायाः शैथिल्यमस्ति, केवलं करुणरसस्यातिरञ्जना वर्तते, परमियं धारणा सम्पूर्णतया भ्राम्यमूलकास्ति । भवभूतिना रामनेत्राभ्यामियदश्रुधाराः व्यर्थं न प्रवाहिताः । आभिरश्रुधाराभिः सीतारामयोस्तन्मिलनवृक्षस्य मूलं परिषिञ्चितम् । यस्य सुखदच्छायायामन्तिमक्षणे दर्शका अपूर्वविश्रान्तिं प्राप्नुवन्ति, अपि च कविवरेण सीतायाः परित्यागजनितपरितप्तहृदयस्य व्यथाऽऽभिरश्रुधाराभिः प्रक्षाललिता । करुणरसस्य प्रवाहो यादृगस्मिन्नङ्के दृश्यते तादृक् कुत्रचिदपि दृष्टगोचरो न भवति । करुणरसस्य पराकाष्ठामुपलक्ष्य केनचिदालोचकेनोल्लिखितम् ।

**जडानामपि चैतन्यं भवभूतेरभूद्गिरा ।**

अस्मिन्प्रासङ्गिके प्रथमाङ्के—

**अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना,**

**तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।**

**जनस्थाने शून्ये विकलकरणैरार्यचरितै—**

**रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ।।**

(उ० रा० च० १/२८)

अथ शूर्पणखाया घटनानन्तरं पापाचारिराक्षसैः सुवर्णमृगच्छद्मविधिनेदं सीताहरणाख्यं वृत्तं संजातम् । तज्जन्यपापं मारीचरावणादिराक्षसकुलानां वधं कृत्वा आर्यैः क्षालितमपि अत्यन्तं दुःखमुत्पादयति । सीताविरहिननिर्जनास्मिन्दण्डकारण्ये रामस्य भूमिलुण्ठनपूर्वकविलापादिभिः सर्वेन्द्रियाणि विकलानि भवन्ति । पाषाणमपि अश्रु मुञ्चति वज्रस्यापि हृदयं विदीर्यते । पण्डितगोवर्द्धनाचार्येण स्वकीयार्यासप्तशत्यामिदमुक्तम् ।

**भवभूतेः सम्बन्धात् भूधरभूरेव भारती भाति ।**

**एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ।।**

**भवभूतेर्मौलिकविषया:**

रामकथा वाल्मीकिरामायणे दुःखपर्यवसायिनी कथा वर्तते। परन्तु भवभूतिना भारतीयनाट्यपरम्पराया अनुसरणं कृत्वा तस्यै सुखान्तरूपकं प्रदत्तम्। यथाहि—चित्रदर्शनं, रामस्य पुनर्दण्डकारण्ये आगमनम्, वनदेविवासन्त्या सह साक्षात्करणम्, छायासीतायाः सत्ताप्रदर्शनम्, तथा च सप्तमाङ्के गर्भाङ्कस्य वर्णन कवेर्मौलिकपरिकल्पनाविषयाः सन्ति।

**महाकवेर्हृदयपक्ष:**

मानवीयभावगांभीर्ये प्रविश्य भावस्य मार्मिकरूपेणाभिव्यक्तकरणे भवभूतिर्नितान्तदक्षोऽस्ति। अनेनोपमोत्प्रेक्षयोः व्यूहं निर्माय तद्भावसौन्दर्यमनावश्यकाडम्बरे स्थापयितुं कदाप्यभिलाषो न कृतः। हृदयस्य सहजभावनां सरलशब्दैरेव प्रकाश्य अयं शान्तिमाप्नोति। चित्रदर्शनेन समुत्पन्नानां रामस्य मनोभावानां वर्णनं कियत्सुन्दरं वर्तते—

**अयं ताबद्बाष्पस्त्रुटित इव मुक्तामणिसरो,**
**विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः।**
**निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया,**
**परेषामुन्नेयो भवति चिरमाध्मातहृदयः॥**

( उ० रा० १/२९ )

अपि च प्रच्छन्नतया मूर्च्छितरामस्याङ्गस्पर्शने तस्माच्च "हा प्रिये जानकि"! इति वचनं श्रुत्वा निष्कारणनिर्वासिताऽपि गभीरशोक विह्वलसीताया रामं प्रति हृदयपरिवर्तनानन्तरं तमसा तस्यै सान्त्वनां प्रयच्छति या कवेर्हार्दिकपक्षं परिस्फुटं करोति।

यथा तमसा

**जानामि वत्से! जानामि।**
**तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-**
**द्वियोगे दीर्घेऽस्मिञ्झटिति घटनात्स्तम्भितमिव।**
**प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं**
**द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव॥**

(उ० रा० च० ३/१३

अर्थात्, इदानीं ते मनः जन्मान्तरेऽपि पुनर्मिलनासम्भवहेतुकाशा-रहितादौदासीन्यं निष्कारणपरित्यागरूपमालिन्यं क्रोधं च भजते। तथा दीर्घकालाद्वियोगे ऽप्याकस्मिकप्रेमद्योतक सम्बोधनान्निश्चलम्, प्रियतमस्य सौजन्यवशात्प्रसन्नं तस्य शोकाकुलावस्थाविशेषेण प्रेम्णा तरलीभूतं च भवति।

हृदयभावानां सूक्ष्मविश्लेषणं कियत्तात्त्विकमस्तीत्यनेन प्रकारेण प्रजापतिसमकविना हृदयपक्षीयस्वप्रतिभायाः सर्वोच्चभावःप्रदर्शितः।

**भवभूतेः रसवैशिष्ट्यम्**

संस्कृतवाङ्मयकाव्यशास्त्रेषु आचार्याणां मतेन नवरसानां वर्णनं प्राप्यते। तेषां मध्ये श्रृङ्गाररसस्य श्रेष्ठत्वं प्रायः सर्वैः स्वीक्रियते। रस्यते आस्वाद्यते रस इति व्युत्पत्त्या भगवद्भक्तिः आस्वादनयोग्या भवति। अतो भक्तिरसविशेषज्ञैः श्रीमद्भिः रूपगोस्वामिचरणैः श्रृङ्गारादि नवरसादतिरिक्तभक्तिरसमपि स्वीयभक्तिरसामृतसिन्धौ ग्रन्थे सिद्धान्तितम्। "आचार्यबलदेवोपाध्यायेनोल्लिखितम् आलंकारिकेषु आदि-रसस्य विषये विशेषो मतभेदो दृश्यते। महाराज-भोजदेवः श्रृङ्गार रसमेव रसानामग्रणीं विदन्ति। शैवागमस्यानुयायिनः कश्मीरदेशस्थ-कविगणाः शान्तरसमेव मुख्यरसं मन्यन्ते"।

परन्त्वालोच्यनाटके कविवर्यभवभूतिना नवरसानां मध्ये करुण-रसमेव प्रधानं मन्वानेनोक्तम्—

**एको रसः करुण एव निमित्तभेदा-**
**द्भिन्नः पृथक् पृथगिव श्रयते विवर्तान्।**
**आवर्तबुद्बुदतरङ्गमयान्विकारा-**
**नम्भो यथा सलिलमेव तु तत्समग्रम्॥**

**(उ० रा० च० ३।४७)**

कविर्जलस्य दृष्टान्तेन करुणरसस्य वैशिष्ट्यं स्थापयति। एकः करुणो रस एव कारणभेदाद्भिन्नो भूत्वा तद्वत्पृथक् पृथक् परिणामं धारयित्वा श्रृङ्गाराद्यनेकरसेषु परिणतो भवति। यथा सलिलं कदाचिद् बुद्बुदाकारेण, कदाचित्तरङ्गरूपेण कदाचित् आवर्ताकारेण विकृतं भूत्वा विभिन्नरूपाणि धारयति परन्तु तत्समग्रं सलिलमेवास्तीति कवेराशयः।

कविवरेण लोकोत्तररामस्य सीतानिमित्तकविरहविलापैः करुणरसस्यैव चूडान्तपराकाष्ठाया विस्मयावहो विचित्रचमत्कारो निर्दिश्यते—

**हा हा देवि ! स्फुटति हृदयं स्रंसते देहबन्धः,**
**शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।**
**सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,**
**विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ।।**

अत्र सीताविरहित"व्याकुलित" रामस्यातिविषादवर्णनपूर्वकं करुणरसस्य प्रगाढ़ताप्रदर्शनमभूत् । हा हेति, इत्यव्ययसम्बोधनपूर्वक कथनादतिशयविषादस्य सूचना भवति । अर्थात् रामेणोक्तम्—हे देवि सीते ! अधुना मम हृदयं विदीर्णं भवति, अङ्गानां सन्धयः शिथिलाः संजाताः, संसारं शून्यमवगच्छामि । मम हृदयाभ्यन्तरमविश्रान्तशोकज्वालया प्रज्वलितं भवति । त्वां विना अन्तरात्मा ऽवसादग्रस्ततया प्रगाढ़तमसि निमज्जति । मोहश्च चतुर्दिक्षु मामावृणोति । ईदृगवस्थायां मन्दभाग्योऽहं किं करोमि । इत्यादि बहुशः कविना कारुण्यविषये वर्णितं किमधिकम् ?

—०—

# त्रयस्त्रिंशत्तमः किरणः

# ब्रह्मतत्त्वम्

अनादिकालादस्मिन् सिद्धान्ते विचारविमर्शं कुर्वद्भिः संख्यातीतैर्मतिमत्तरैः ऋषिभिर्महर्षिभिः सहस्राधिकवर्षाणि यापितानि, परमस्य विषयवस्तुनोऽनुसन्धानं पूर्णरूपेण नाद्यावध्यभूत् केवलं प्रश्नमात्रमवशिष्टं तद् ब्रह्म किमस्तीति। एतद्धेतोः वेदोपनिषद् ब्रह्मसूत्रश्रुतिस्मृत्यादीनामनेकशास्त्राणामध्ययनस्यावश्यकताऽऽपतिता। पुनरपि स एव प्रश्नः स्थितो भवति यद् वास्तविकं ब्रह्मतत्वं किमस्ति यद्यप्यस्य विषयस्योपदेशकरूपेण परमेश्वरस्य शक्त्यावेशावतारेण स्वयं कृष्णद्वैपायनवेदव्यासेन द्वापरस्यान्तिमचरणे स्वब्रह्मसूत्रस्याकृत्रिमभाष्यं[1] श्रीमद्भागवतविरचय्य सर्वोत्कर्षकः श्रीकृष्ण एव ब्रह्मतत्त्वरूपेण निरूपितः, तथाप्यस्मिन् कलियुगे विभिन्नमार्गावलम्बिनांप्रसिद्धाचार्याणामाविर्भावावभूवुः। एतेषु चाद्वैतवादस्य श्रीमदादिशङ्कराचार्यस्याविर्भावकालः[2] प्रायः ८४५ वि० सं० वर्तते तत्पूर्ववर्त्यनेके आचार्याः—बोधायनः, मृङ्कः गुहदेवः कपार्दैः भारुचिः ब्रह्म सूत्रस्य प्रमुखा भाष्यकारा आसन्। श्रीनिवासाचार्यकृतयतीन्द्रमतदीपिकातो ज्ञायते यदेते बोधायनप्रभृतयो विशिष्टाद्वैतवादिन आसन्। विशेषतो महर्षिबोधायनस्य ब्रह्म सूत्रस्य भाष्यरूपे विस्तीर्णा वृत्तिः प्रसिद्धा।

श्रीमच्छङ्कराचार्यस्योत्तरवर्त्तिनः—श्रीभास्कराचार्यः[3] २. श्रीमद्रामानुजाचार्यः ३. श्रीमन्मध्वाचार्यः ४. श्रीकण्ठाचार्यः ५. श्रीविष्णुस्वामी ६. श्रीनिम्बार्काचार्यः ७. श्रीरामानन्दाचार्यः ८. श्रीवल्लभाचार्यः ९. श्रीविज्ञानभिक्षुः १०. श्रीमद्बलदेवविद्याभूषणः श्रीगौडीयवैष्णवाचार्यः सन्ति। एतेषां मध्ये कोऽपि जीवब्रह्मणोश्च केवलमभेदोऽथवा केवलं भेदवाद इति स्वीकृतवान्। एकमात्रं (श्रीमच्छङ्कराचार्यः केवलमभेदवादं तथा श्रीमन्मध्वाचार्यः केवलं भेदवादं स्वीकृत्य क्रमशः ब्रह्मसूत्रीयभाष्ये विरचितवन्तौ। सर्वैराचार्यैः श्रीवेदव्यासप्रणीतब्रह्मसूत्रस्योपरि स्व स्वं भाष्यं

---

१—श्रीमद्भागवतमाहात्म्यसम्बन्धे गरुडपुराणवचनम्
भाष्यं हि ब्रह्मसूत्राणां भारतार्थ विनिर्णयः।
गायत्रीभाष्यरूपोऽसौ वेदार्थ परिबृंहितः॥

२—डॉ० सुरेन्द्रनाथदासगुप्तस्य मते ७८८ खीष्टाब्दः।

३—सिद्धान्तशिरोमणिग्रन्थकर्तुरन्येन उदयनाचार्येण १०४१ विक्रमाब्दे स्वस्य न्यायकुसुमाञ्जलौ ग्रन्थे यस्य नामोल्लेखः कृतः सोऽयं ब्रह्मसूत्र भाष्यकृद्भास्कराचार्यः॥

कृत्वा ब्रह्मतत्त्वस्य वास्तविकं तथ्यं पूर्णरूपेण श्रद्धालुजिज्ञासुव्यक्तीनां कृते सिद्धान्तरूपेणयन्निर्णीतं तस्य सारगर्भोऽत्र दिग्दर्शनरूपेण प्रस्तूयते ।

ब्रह्मण उत्पत्तिविकासयोर्व्याख्यानं मानवमस्तिष्कातीतो विषयो वर्तते । परन्तु समयानुसारेण ते महापुरुषाः स्व-स्व-विचारसंस्थापनार्थं यतन्ते स्म । उपनिषद्गम्यमहावाक्यानां रहस्यात्मकतापरिपूर्णविचारः साधारणपुरुषेण कर्तुं न शक्यते । अतः पूर्वोक्ता आचार्याः परमेश्वर-प्रेरणयावतारं जगृहुः[1] "आचार्यं मां विजानीयात्" इतिवचनेन भगवता श्रीकृष्णेन विश्वमिदं निर्देशितं यतोहि आचार्यंमामेव विद्धि, अहं विश्वस्मै कल्याणमयीं शिक्षां दातुमाचार्यरूपेण प्रतियुगंसम्भवामीति ।

भगवद्बुद्धानन्तरं स्वयं शङ्करः श्रीशङ्कराचार्यरूपेणाविर्भूय ब्रह्मसूत्र-शारीरक[2] भाष्यं प्रणीय ब्रह्मतत्त्वमित्थं प्रतिपादितवान् ।

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।
इदमेव तु सच्छास्त्रमिति वेदान्तडिण्डिमः ॥

एकं ब्रह्म द्वितीयं नास्तीति । अर्थात् निर्विशेषः सकलविशेषोऽथवा सजातीयो[3] विजातीयः[4] स्वगतश्चेति[5] त्रिविधभेदरहितं यद्ब्रह्मतत् सत्यमेव मेव तदतिरिक्तं द्वितीयं वस्तु किमपि नास्ति । जगन्मिथ्यास्वरूपो जीवस्तु ब्रह्म एव अपरो नति । अनेन प्रकारेण ब्रह्मतत्त्वसम्बन्धेकेवलाद्वैतसिद्धान्त-मकाट्यप्रमाणरूपेण मायावादं विवर्तवादं वा प्रतिपादयित्वा जीवब्रह्मणो-भेदवादस्यान्दोलनं चकार ।

---

१—श्रीमद्भागवतम् ११।१७।२७ ।

२—शरीराधिष्ठितो जीवोऽयवा शरीरे भवं सुखदुःखं चेति शारीरकनाम्ना-भिहितम् ।

३—परब्रह्मण उत्पन्नोजीवः भगवद्धाम भगवत्स्वरूपस्तस्य परिकराद्भेद-शून्यम् ।

४—जन्माद्यस्य यतः (ब्र० सू० १।१।२) ब्रह्मणोऽस्य जगतः जन्मस्थिति-भङ्गश्चाऽभेदशून्यम् ।

५—सच्चिदानन्दवस्तु ब्रह्मणो देहदेहिनश्चोपादानगतभेदशून्यम् यथा स्वर्णे कुण्डलरूपधृते सति स्वर्णेन सह कुण्डलस्य स्वगतभेदस्तच्छून्यम्

**१—श्री भास्कराचार्यः**

श्री शङ्कराचार्यानन्तरं श्रीमद्रामानुजाचार्यात् पूर्वं श्रीमद्भास्कराचार्यः प्रायः १०४१ विक्रमाब्दात् पूर्वमेवाविर्भूय समयानुसारं श्रीवेदव्यासकृत ब्रह्मसूत्रस्य भाष्यं रचयित्वा ब्रह्मणो निराकारस्वरूपं स्त्रीकृत्य जीवब्रह्मणोरौपाधिकमथवा औपचारिकभेदाभेदवादं प्रचारयामास । अयमेव श्रीमच्छुङ्कराचार्यस्य परवर्ती वेदान्तसूत्रस्य प्रथमो भाष्यकर्ता आसीत् । अवेन ब्रह्म कारणरूपेऽभिन्नं तथा कार्यरूपे भिन्नं चोक्तम् । तस्य कार्यरूपमौपाधिकं, ब्रह्म एव जीवरूपेण परिणतम् । जगत् कार्यरूपेण परिणतम् । सृष्टिर्ब्रह्मणः शक्तिविशेष मात्रम् । मीयते परिच्छिद्यतेऽनयेति माया बह्नेर्धूमशक्तिवदिते । ब्रह्मणोभेदा भेदस्वरूपे कार्यकरणयोश्च द्विविधरूपं वर्तते कारणरूपे तदेकमद्वितीयं कार्यरूपे बहुइति कथितम् । यथा कारणरूपे स्वर्णमेकं कार्यरूपे वलय-कर्णभूषण-हार-इत्यादिकवत् । अतोब्रह्मकारणरूपेऽभिन्नंसत्यस्वरुपं कार्यरुपे भिन्नं भेदमौपाधिकं सत्यसत्वेंऽप्यागन्तुकमितिसिद्धान्तितम् । अस्य भाष्यं भास्कर भाष्यनाम्ना ख्यातम् । अस्य ब्रह्म निराकारम् इति ।

**२—श्रीमद्रामानुजाचार्यः**

मान्द्राजनगर्य्याः प्रायस्त्रयोदशक्रोशपश्चिमदिशि पेरम्बुदुरग्रामे श्रीलक्ष्मणावतारस्य श्रीमद्रामानुजाचार्यस्य १०७३ विक्रमाब्दे चैत्रशुक्ला पञ्चम्यामाविर्भावो बभूव । समयानुसारं तेन स्वस्य परमप्रियशिष्य-कुरेशस्य सहयोगेन बोधायन वृत्यवलम्बनेन च प्रायः ११८२ विक्रमाब्दे ब्रह्मसूत्रस्य द्वितीयव्याख्यारूप-श्रीभाष्य 'द्वारा ब्रह्मतत्त्वस्य' विशिष्टाद्वैतवाद' —सिद्धान्तस्य प्रतिपादनं कृतम् । अस्मिन् सिद्धान्ते सृष्टिकालीन स्थूलचिदचित्प्रलयकालीनसूक्ष्म चिदचिद विशिष्टब्रह्मण एकत्वं बहुत्वं चिदचिद्विशिष्टाद्वैततत्त्वम् अपि च जगद्ब्रह्मणः स्थूलशरीर ब्रह्मवत्सत्यं रज्जौ सर्पभ्रान्तिवदसत्य न ।

जीव : —जीवो नित्योऽनाद्यनन्तब्रह्मपरिणामोऽणुस्वरूपो बद्धमुक्त-भेदेन द्विविधः । मुक्तस्तु बद्धमुक्त-नित्यमुक्त भेदेन द्विविधः । अयंपरमात्मनो विशेषण रूपोंऽशः । ब्रह्म एव जगतो निमित्तोपादानकारण च ।

माया :—माया त्रिगुणात्मिका विचित्रसृष्टिकारिणी परब्रह्मणः शक्तिः सत्यस्वरूपा मिथ्यापर्यायियुक्ता न । इय परमेश्वरस्य प्रकृतिरनयाच परमेश्वर इदं जगत् सृजति । एभिराचार्यचरणैरुक्तं यत् ब्रह्मवस्तुतोऽद्वैत-

मेवास्ति परन्तु तस्मिन् काचित् विशेषता वर्तते । सा विशेषता श्रीः भू लीला इत्यादिशक्तिभिर्युक्तं सशक्तिकं ब्रह्मपरव्योम वैकुण्ठपतिः साक्षा नारायणः, यो नराणामयनमाश्रयस्वरूपं वर्तते । अयमस्मिन् कलौ श्रीसम्प्र दायस्य प्रथमाचार्यरूपेण विख्यातः । अयमजं सशक्तिक श्रीमन्नारायणं ब्रह्म रूपेण प्रतिपादितवान् ।

३—श्रीमन्मध्वाचार्यः

दक्षिणकनाडाजनपदस्य माङ्गालोरनगरात्प्रायः १८ अष्टाद क्रोशोत्तरदिशि, आरबसागरतटात् सार्द्धक्रोशपूर्वदिशि उडूपीनग वर्तते । तस्मात्प्रायश्चतुः क्रोशाग्नेयकोणेपापनाशिनीनद्यास्तटे विमा गिरेरर्द्धक्रोशपूर्वदिशि पाकजाक्षेत्रे १२९५ विक्रमाब्दे शिवालीब्राह्म वंशीयस्यगेहे श्रीमन्नारायणभट्टात् श्रीमद्वेदवतीपवित्रगर्भा विजयदशम्य तिथौ शुभमुहूर्ते वाय्वावतारस्य श्रीमन्मध्वाचार्यस्याविर्भावो बभूव । अस बाल्यनाम श्रीवासुदेवस्तथा द्वादशवर्षे पितरौ संगोपनेऽच्युतप्रेक्षात्संन्या ग्रहणानन्तरं पूर्णप्रज्ञतीर्थः पश्चादभिषेकान्ते आनन्दतीर्थः, आचार्यत प्रकाशानन्तरं श्रीमन्मध्वाचार्य एभिर्नामभिरलङ्कृत आसीत् ।

ऐतिह्य-प्रमाणानुसारम् अयं श्रीवदरिकाश्रमे श्रीवेदव्यास साक्षात्कारं लब्ध्वा तदाज्ञया तृतीयब्रह्मसूत्रभाष्यं रचयामास । इदं भाष सर्वापेक्षया बृहद् अस्मिन्नन्यमतस्य खण्डनं नास्ति, केवल श्रुतिस्मृत्या प्रमाणैः स्वसिद्धान्तस्य प्रतिपादनमस्ति । एतदतिरिक्तं भाष्यमेकं श्लोक कारेण विरचय्यपूर्ववर्तिनामाचार्यगणानां मतवादखण्डनपूर्वकं तेन स्वम स्थापितम् । अनेनापरभाष्यमेकं प्रणीय ब्रह्मसूत्रस्य प्रत्येकाधिकरणस तात्पर्यं श्लोकाकारेण संक्षिप्तं गुम्फितम् । इत्थं ब्रह्मसूत्रस्य तृतीयव्याख् रूपेण भाष्यत्रयमाचार्यचरणैः प्रणीतं, यच्चपूर्णप्रज्ञभाष्यनाम्नाऽवन विश्रुतमस्ति । अस्मिन्कलियुगेऽयं ब्रह्मसम्प्रदायस्य प्रथमाचार्यरूपे प्रसिद्धः ।

श्रीमन्मध्वाचार्यस्य सिद्धान्त :

अस्यसिद्धान्तः शुद्धाद्वैतोऽथवा केवलाद्वैतवादः, इति कथ्यते अनेन जीवब्रह्मणोः स्वतन्त्रास्वतन्त्रभेदौ जातौ । स्वाभाविकभेदवादम स्वतन्त्रपरमेश्वरात्परतन्त्रजीवतत्त्वसमूहस्य नित्यभेदः कथितः । अनेन जीवेश्वरयोर्जीवजीवयोः, ईश्वरजडयोर्जीवजडयोर्जडजडयोश्चेति पञ्च भेदानाद्वैतंनित्यं सत्यमनादि च स्वसिद्धान्तेनोरीकृतम् ।

उक्तं च—

**जीवेशयोर्भिदा चैव जीवभेदः परस्परम् ।**
**जडेशयोर्जडानां च जडजीवभिदा तथा ।।**
**पंच भेदा इमे नित्याः सर्वावस्थासु नित्यशः ।**
**मुक्तानां च न हीयन्ते तारतम्यं च सर्वदा ।।**

ब्रह्मतत्त्वसम्बन्धेऽस्य मतं विष्णुरेव ब्रह्मशब्दवाच्यः । अन्यत्र ब्रह्मशब्दस्य प्रयोगोऽसम्पूर्णं उपचारमात्रं भविष्यति । यस्मात्सृष्टिः[1] स्थितिः संहारोनियमनं ज्ञानाज्ञाने बन्धमोक्षौ भवतः स एव विश्वव्यापको विष्णुर्ब्रह्म । तस्मिन्नानन्दप्रचुरत्वात्स आनन्दमयोऽचिन्त्यानन्तैश्वर्यशालिसर्वतन्त्रस्वतन्त्रतत्त्वम् । ईश्वरोब्रह्म चैकमेव तत्त्वं ब्रह्मजगतो निमित्तकारणमात्रमुपादानकारणं न ।

**जीवः**—जीवः परतन्त्रतत्त्वमध्ये चेतनस्वरूपः । ब्रह्मणो नित्य-भिन्नः सत्यानन्तोऽणुपरिमाणः श्रीहरेर्नित्य अनुचरः । स सत्त्वरजस्तमो-भेदेषु त्रिविधो बद्धजीवो विभिन्नांशः प्रतिविम्बांशो वा ।

**जगत्**—जगत्सत्यं जडं परतन्त्रं च ब्रह्मणस्तत्त्वाद्भिन्नं ब्रह्मणोज्ञान-पूर्विका सृष्टिः सुतरां सत्या । विष्णोर्वशवर्तिनः तस्य नित्यता प्रवाह क्रमे वर्तमाना ।

**माया**—मायामुख्या अमुख्या प्रकृतिभेदे त्रिगुणा । माया तु श्रीहरेः शक्तिस्वरूपा ।

ब्रह्मसम्प्रदायतत्त्ववादिविद्वांसः श्रीमन्मध्वाचार्यस्य संक्षिप्तमत अनेन प्रकारेण कथयन्ति, यथा हि—

**श्रीमन्मध्वमते हरिः परतमः सत्यं जगत्तत्त्वतः,**
**भेदो जीवगणा हरेरनुचरा नीचोच्चभावंगताः ।**
**मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्चतत्साधन-**
**[2]मक्षादि त्रितय प्रमाणमखिलाम्नायैकवेद्यो हरिः[3]**

---

१—यन्माद्यस्य यतः (ब्रह्म सू० १/१/२) ।
२—शब्दानुमानप्रत्यक्षम् ।
३—न्यायमृताकार व्यासतीर्थरचितः । अयं श्रीचैतन्यदेवस्य समसामयिकः । सम्भाव्यते, श्रीचैतन्यदेवस्य दक्षिणयात्रायामुडूपीतीर्थे गमनावसरेऽनेन सह महाप्रभुः सम्प्रदायसिद्धान्तसम्बन्धीष्टगोष्ठिां वार्तालापं चकार । अस्याशयः श्रीतन्यचरितामृते वर्णितोऽस्ति ।

**ऐतिह्यप्रामाण्येन**—विशेषतः श्रीमन्मध्वाचार्यः गोपीचन्दनपिण्ड भ्यन्तराद् दधिमन्थनदण्डधृक् श्रीनर्त्तकगोपालरूपे श्रीकृष्णमूर्ति साक्षात्कृत्य प्राप्य च तामुडुप्यामानीय श्रीअनन्तेश्वरमन्दिरस्य पूर्वोत्त भागे बृहत्सरोवरस्य पश्चिमतटे स्थापितां कृत्वा तं लीलामयं सशक्ति नर्त्तकगोपालं परब्रह्मरूपेण मन्यतेस्म ।

**४—श्रीकण्ठाचार्यः**

महीशूरनगर्य्या दक्षिणदिशि केदारेश्वरशिवमन्दिरस्थगुरुप्रणा ज्ञायते यत् प्रथमगुरुः श्रीकेदारशक्तिस्तच्छिष्यः श्रीकण्ठाचार्यः । श्रीमन्मध्वाचार्यपरवर्त्याचार्यः, प्रायः १२९५ पंचनवत्युत्तरद्वादशशते ब्दात्परवर्तिकाले आविर्भूय ब्रह्मसूत्रस्य चतुर्थभाष्यं विरचय्य विशि शिवाद्वैतवादं प्रचारयामास । अनेन स्वब्रह्मसूत्रभाष्यस्य मंगलाचार पंचमश्लोकेलिखितम् ।

**व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने ।**
**पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाद्यते ॥**

अर्थात्—ब्रह्मदर्शनविषये विद्वद्गणानां चक्षुरिदं ब्रह्मसूत्रं पूर्वाचा गणैः कलुषितं दृष्टवा मया श्रीकण्ठाचार्येण निर्मलता सम्पाद्यते । अत्र पूर्वा चार्यैरिति पदेन श्रीकण्ठभाष्यस्य व्याख्याकारेणाप्पयदीक्षितेन क शाङ्करभाष्यं (शारीरकभाष्यं) रामानुजभाष्यं (श्रीभाष्यं) आभ्यां विभि वाक्यमुद्धृतं कृत्वा तेषामसङ्गतेस्तथा कष्टकल्पनादिदोषप्रदर्शनपूर्व आधुनिकभाष्यप्रणेतॄन् तथा पूर्वपूर्वोपदेशकगणान् लक्ष्यीकृत्वोक्तवा प्रयुक्तं बभूव ।

श्रीकण्ठाचार्येण स्वयं ब्रह्मसूत्रस्य प्रकृत्यधिकरणे ब्रह्मोपादानका भवितुं नार्हति "यथा—नहिघटं निर्मिमाणः कुलालः स्वयमेव मृत्पिण्डी घटं करोति पटं वा कुविन्दः" अर्थात्—घटनिर्माणरतः कुम्भकारः स्वयं मृत्पिण्डे परिणतो भूत्वा घट-निर्म्माणं न करोति । अथवा तन्तुवायो सूत्रेपरिणतो भूत्वा वस्त्रमपि न वयति । इत्यादि तर्कपूर्णयुक्ति दत्त्वा ब्रह्म उपादानकारणत्वं खण्डयित्वा स्वभाष्ये प्रतिपादितः, परमित्पादि सदृष्टा युक्तिसमूहः पूर्ववर्त्तितत्त्ववादिमध्वानुगाचार्याणां ग्रन्थेषु दृष्टो भवति ।

विशेषतः श्रीमन्मध्वस्तदनुगसम्प्रदायादन्यसम्प्रदायवेदान्ति सर्वैरपि ब्रह्मण्युपादानकारणत्वमङ्गीकृतम् । एतेन ज्ञायते श्रीकण्ठा

श्रीमन्मध्वाचार्यानन्तरमाविर्भूय श्रीमद्रामानुजाचार्यमतस्यानुकरणेन स्वमतस्य कल्पनांचकार। प्रमाणस्वरूपं श्रीकण्ठाचार्यस्य ब्रह्मसूत्रभाष्याध्ययनेन येन केनापि आचार्येण तत्र शारीरकभाष्यस्य बहुवाक्यानि तन्मतस्यखण्डनं च श्रीमद्रामानुजाचार्यवत् तथैवानुकृतं द्रष्टुं शक्यते।

**श्रीकण्ठाचार्यस्य मतवादः**

अस्य मतवादस्य सम्बन्धे चेदं वक्तुं शक्यते, अनेन श्रीमद्रामानुजाचार्य सिद्धान्तस्य बह्वनुकरणं कृत्वा स्वमतं "विशिष्टशिवाद्वैतवाद" इति प्रतिपादितम्। एतेन ज्ञायते, श्रीकाण्ठाचार्यः "शैवयोगी" आसीत् यतस्तेन स्वकृतभाष्यस्य प्रारम्भे शैवसम्प्रदायप्रथमाचार्यस्य श्रीमतः श्वेताचार्यस्य वन्दनाकृतास्ति। अनेनापि श्रीमद्रामानुजाचार्यकथितपरतत्त्वश्रीमन्नारायणस्य स्थाने श्रीशिवं परतत्त्वं कथयित्वा ब्रह्मणो लक्षणं कृतं - निरस्त समस्तोपप्लवकलङ्क-निरतिशय ज्ञानानन्दाशक्तिमहिमातिशयवत्त्वं हि ब्रह्मत्वम्, अर्थात् स शिवः समस्त प्रतिबन्धकशून्यस्तथा कलङ्कराहेतो निरतिशयज्ञानानन्दादिशक्तिविशिष्ट[1] स्तस्मिन्सर्वज्ञता तथा शक्तिमत्ता। वरीवर्ति। ब्रह्मण चिदचिच्छक्तिविशिष्टतैव स्वाभाविकी। अतः सः शिवः कदापि निर्विशेषो न हि विद्यते इत्युक्तम्।

जीवः—अस्मिन्मते जीवो ब्रह्मणः कार्यं, कार्यकारणयोरभिन्नता विषये सजातीयविजातीयभेदरहितत्वेऽपितस्मिन् स्वगतभेदोविद्यमानः।

जगत् शिवो जगतोर्निमित्तकारणमुपादानकारणं न। स निरुपाधिकपरमैश्वर्यवत्त्वादीशानः पशुः जीवः पाशस्य मायाया ईश्वरत्वात्पशुपतिः जीवस्य पाशपटले विध्वस्ते सति ब्रह्मभावप्राप्तिर्भवति।

आत्मा आत्मा विभुरर्थात् व्यापकः परं प्रतिशरीरे भिन्नः।

शिवत्वप्राप्तिरेव मुक्तिः। मुक्तिरेव साध्या उपासनायाः फलमिति।

—०—

१—चिदचित्प्रपञ्चरूपशक्तिविशिष्टत्वं स्वाभाविकमेव ब्रह्मणः कदाचिदपि न निर्विशेषत्वमित्यनेन सिद्धम्।

ब्रह्मसूत्रम्—१/१/२ श्रीकण्ठभाष्यम्।

### ५. श्रीविष्णु स्वामी

१—आदिविष्णुस्वामी २—श्रीराजविष्णुस्वामी ३—श्रीप्रभु विष्णुस्वामीति विष्णुस्वामित्रयमासीत्। एषां सम्बन्धे श्रीवल्लभाचार्यस्य पौत्रेण श्रीमता यदुनाथेन लिखितस्यश्रीवल्लभदिग्विजयग्रन्थस्य द्वितीयावच्छेदे श्रीवल्लभाचार्यं श्रीविष्णुस्वामिसम्प्रदायस्याधस्तनाचार्य-रूपेण स्थापयितु श्रीविष्णुस्वामिपादस्य धारावाहिकेतिहास उल्लिखितः।

यथा—प्राचीन द्रविडदेशान्तर्गतस्य पाण्ड्यदेशनृपस्य पाण्ड्यविजय-स्य पुरोधाः श्रीदेवस्वामिनः पुत्रः श्रीविष्णोरवतार आदिविष्णुस्वामीतः। तस्य शिष्यपरम्पर्येण सप्तशताचार्यानन्तरं श्रीराजविष्णु स्वामिनामकस्य द्वितीयविष्णुस्वामिनः प्रादुर्भावो जातः। अयं श्रीद्वारकायां द्वारकाधीशस्य श्रीविग्रहस्थापनं चकार। अयं च काञ्चीनगर्यामागत्य द्रविडयतिराजं श्रीविल्वमङ्गलं स्वीयाधस्तनाचार्यपदेऽभ्यसिञ्चत्।

ततः श्रीविल्वमङ्गलः श्रीदेवमङ्गलं स्वीयाधस्तनाचार्यरूपेण स्थापितं कृत्वा ततः श्रीवृन्दावनं गत्वा तत्र भगवतः श्रीकृष्णास्याज्ञया ब्रह्मकुण्डोप-कण्ठे योगबलेनैकमहावृक्षच्छायायां सप्तशतवर्षकालं यापयामास। अस्मिन् सप्तशतवर्षाभ्यन्तरे श्रीराजविष्णुस्वामिन आम्नाये श्रीप्रभुविष्णु-स्वामिनामकस्तृतोयो विष्णुस्वामी प्रादुर्बभूव। अस्य गृहस्थशिष्यस्य पारम्पर्ये श्रीलक्ष्मणभट्टस्य पुत्रः श्रीवल्लभभट्टः सुप्रसिद्ध वल्लभाचार्य नाम लेभे।

अनेन (श्रीदुनाथेन) उक्तं श्रीसर्वज्ञ विष्णुस्वामी (आदिविष्णुस्वामी) बाल्यकालादेव श्रीबालगोपालस्यार्चनपरायण आसीत्। एकवर्षावधि कृतसेवानन्तरं श्रीबालगोपालस्य साक्षाद् दर्शनाभावे स मानसिकदुःखेन सम्पूर्णानशनव्रतपूर्वकं तद्विग्रहस्य सेवां कर्तुमारेभे। ततः सप्तमदिवसे भगवता बालगोपालेव श्रीविष्णुस्वामिने दर्शनं दत्त्वा वेदधर्मप्रचारार्थं श्रीशुकप्रोक्त श्रीमद्भागवतं श्रीव्यासदेवस्याभिप्रेतवेदान्तव्याख्याया मण्डितं कर्तुं श्रीव्यासदेवसमीपे श्रवणं कृत्वा जगति तद् विस्तारार्थ-मुपदिष्टम्। तदुपदेशानुसारं श्रीविष्णुस्वामिना गन्धमादनपर्वतगत्वा श्रीव्यासदेवस्य साक्षाद्दर्शनं विधाय तस्मात् सदुपदेशः प्राप्तः। यद्ब्रह्मविद्यां श्रीमन्नारायणात्सङ्कर्षणस्ततोरुद्रस्तस्मान्नारदस्ततो व्यासो लेभिरे। तस्मात् श्रीविष्णुस्वामिना समुपलब्धा ब्रह्मविद्या। तेन च काञ्चीनगर्यां देवदर्शन, श्रीकण्ठ, सहस्रार्चे, शतधृति, कुमारपाद, पराभूति प्रभृति शिष्य-

गणेभ्यो भागवतधर्मोपदेशः कृतः । ततश्च स्वपरमशिष्यदेवदर्शनाय स्वपूजितं श्रीविग्रहं स्वाम्नायग्रन्थादींश्च प्रदाय नित्यलीलायां प्रविवेश इति ।

पूर्वोक्तेषु त्रिषु विष्णुस्वमिषु सः कः यः पुराणोक्तवचनेन[1] श्रीविष्णु स्वामी रुद्रसम्प्रदायस्य कथितः । ऐतिह्यप्रमाणानुसारं श्रीमद्भागवतस्य दार्शनिकभावार्थदीपिकाटीकाकारेण श्रीधरस्वामिपादेन श्रीविष्णुस्वामि सम्प्रदायमुक्तत्वात्तेन श्रीविष्णुस्वामिसिद्धान्तोद्धतावसरे भावार्थदीपिका १।७।६ भावार्थं दीपिका ३-१२।१-२ स्थले श्रीविष्णुस्वामिप्रोक्त पञ्चक्लेशोनां यथा —अज्ञानविपर्यास-भेद-भय-शोकानामुल्लेखः कृतः । अपि च तेन भावार्थदीपिकायां श्रीमद्भागवत १।७।६ श्लोकस्य टीकायां श्रीसर्वज्ञ-विष्णुस्वामिनः संक्षिप्तदार्शनिक-सिद्धान्त उद्धृतः तदुक्तंविष्णुस्वामिना—

ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः ।
स्वाविद्यासंवृतो जीवः संक्लेश निकराकरः ॥
स इशो यद्वशे माया स जीवो यस्तयार्दितः ।
स्वाविर्भूत परानन्दः स्वाविर्भूत सुदुःखभूः ॥
स्वादृगुत्थविपर्यास[2] भवभेदजभीःशुचः ।
यन्मायया जुषन्नास्ते तमिमं नृहरिं नुमः ॥

(भावार्थदीपिका १।७।६)

श्रीसर्वज्ञविष्णुस्वामिन उपास्य भगवान् श्रीनृहरिस्तस्य ब्रह्मसूत्र भाष्यं सर्वज्ञसूक्तिरिति प्रसिद्धम् । तेनोक्तं हलादिनी (आनन्ददायिनी) संवित्छक्ति - सर्वज्ञताशक्तिर्द्वाभ्यामालिङ्गित सच्चिदानन्दविग्रह एव

---

१—रामानुजः श्रीस्वीचक्रे मध्वाचार्यश्चतुर्मुखम् ,
श्रीविष्णुस्वामिनो रुद्रं निम्बादित्यश्चतुः सनम् ॥
अस्मिन् कलियुगे रामानुजादय एते चत्वार आचार्याः सर्वप्रथमं
श्रीब्रह्मरुद्रसनकसम्प्रदायान् स्वीचक्रिरे इति प्रसिद्धाः ।

२—स्वादृगुत्थविपर्यास इत्यादि वाक्यस्य व्याख्यायां क्रमसन्दर्भे १।१।६ स्थले श्रीमज्जीवगोस्वामिना उक्तम्—

'तत्र स्वादृगुत्थेति—स्वादृग् तेनोत्थितो यो विपर्यासः स्वरूपाऽन्यथा ज्ञानं तद्भवो यो भेदः भिन्ने देहादावहं ममतारूपा तस्माज्जाता या भीः शुचयः ताजुषमाण आस्ते इत्यर्थः ।"

ईश्वरः । जीवोऽनादिबहिर्मुखतारूप अविद्यायाः सम्यग् रुपे भावृतः संक्लेश समूहस्याकरस्वरूपः । माया यस्य वशीभूता यो मायाधीशः स ईश्वरः। मायया अर्दितो लाञ्छितः पीडितो मायाग्रस्तोजीवः । परमेश्वरः स्वप्रकाशः परमानन्दस्वरूपी जीवस्तु स्वरूपतः स्वप्रकाशचैतन्यस्वरूपेऽपि प्रचुरदुःखस्याधारएव ।

अर्थाज्जीवो नैजाज्ञानादुत्थितं स्वस्वरूपस्य अन्यथा ज्ञानं तस्माद्द्भुत आत्मनो देहादौ भिन्नोऽहं ममादिबुद्धिस्तस्मात्समुत्पन्नोऽज्ञानविपर्यास भेदभयशोकादि पंच क्लेशान् सेवमानः यन्मायया जीव एवम्भुते संसारेऽवस्थानं करोति वयं तं श्रीनृसिंहं नमस्कुर्मः ।

श्रीधरस्वामिपादेन श्रीविष्णुपुराणस्यात्मप्रकाशिकाटीकाया (१।१२।१०) श्रीविष्णुस्वामिकृतसर्वज्ञसूक्तिनामकस्य ब्रह्मसूत्रभाष्यस्योल्लेखं कृत्वा तस्मादीश्वरजीवविषयकम् आदि (सर्वज्ञ) विष्णुस्वामिप्रोक्तदार्शनिकसिद्धान्तसूचकं श्लोकं—

'ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्दविग्रहः ।
स्वाविद्यासंवृतोजीवः संक्लेशनिकराकरः ।'

उद्धृत्य भावार्थदीपिकायामन्यत्र (भा०१०।८१।२१) टीकायां सर्वज्ञभाष्यकारं गौरवसूचकवाक्येन भूषितं कृत्वा अथर्ववेदीय नृसिंहपूर्वतापनी श्रुतेः,[1] एकस्य मन्त्रय (२।५।१६) भाष्यमुद्धृतम् । तस्माद्भाष्याच्छ्रीधरस्वामिपादः प्रमाणयति यद् सर्वज्ञभाष्यकारेण (आदिविष्णुस्वामिपादेन) उक्तम् । "मुक्त पुरुषगणाःस्वेच्छापूर्वकंस्वविग्रहधारणं कृत्वा श्रीभगवद् भजनस्य सिद्धान्तं स्वीकुर्वन्ति" ।

श्रीविष्णुस्वामिसम्प्रदायस्य साकारसिद्धि ग्रन्थे–"नृपञ्चास्यशरीरस्य नित्यत्वोपपादनात्" । तदुक्तं साकारसिद्धौ—

सच्चिन्नित्य निजाचिन्त्य पूर्णानन्दैकविग्रहम् ।
नृपञ्चास्यमहं वन्दे श्रीविष्णुस्वामिसम्मतम् ॥

---

१–श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति—यथाह यं सर्वदेवा नमस्यन्ति मुमुक्षवो ब्रह्मवादिनश्च इति व्याख्यातं सर्वज्ञैर्भाष्यकृद्भिः–मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते । इतिपाठान्तरं-मुक्ताश्च लीलया विग्रहं कृत्वा नमन्ति । (एसियाटिक सोसाईटी आफ वेङ्गाल संस्करणम् १८७१ स्रीष्टाब्दीय) मुक्ताश्च लीलया विग्रहं परिगृह्य नमन्ति । पूना आनन्दाश्रम-संस्करणम् १८९५ स्रीष्टाब्दीयम् ।

इत्युक्त्या श्रीविष्णुस्वामिचरणानुगेन श्रीगर्भश्रीकान्तमिश्राचार्यवर्येण श्रीसर्वज्ञविष्णुस्वामिशिक्षानुयापि श्रीनृहरेः सच्चिदानन्दविग्रहत्वमेव प्रतिपादितम्। श्रीविष्णुस्वामिमतावलम्बिनो नृपश्चास्य (पञ्चास्य-सिंहः) अर्थात् श्रीनृसिंहविग्रहस्य नित्यत्वस्वीकारमकुर्वन्। तत्कथं यदुनाथेन श्रीसर्वज्ञविष्णुस्वामिपादः श्रीबालगोपालस्यार्चनपरायण आसीदिति कथितम्[1]। एतेन ज्ञायते यत् श्रीबल्लभसम्प्रदाये श्रीनाथद्वारे गोपालदेवस्य पूजाधिक्यात्तेनादिविष्णुस्वामिनं संयोजयित्वा तन्नाम्ना स्वसम्प्रदायस्य महत्वं परिवर्द्धितम्।

**स्थानं स्थितिकालश्च—**

१—आदिविष्णुस्वामिनः स्थान-स्थितिकाल-सम्बन्धे बहुमतवादः प्रचलित आयाति। डाक्टर फर्कुहारेण खृीष्टीयत्रयोदश (वि० सं० १३५७) शताब्द्यां श्रीविष्णुस्वामिनो दाक्षिणात्ये एकस्मिन्स्थानेऽभ्युदयकालोऽनुमीयते।

२—केषाञ्चिदाधुनिकगवेषकाणां मते श्रीसर्वज्ञविष्णुस्वामिनं सर्वदर्शनसंग्रहकारस्य श्रीमाधवाचार्यस्य गुरुमुल्लिख्य सर्वदर्शनसंग्रहस्य मङ्गलाचरणे श्रीमाधवाचार्येण "सर्वज्ञश्रीविष्णुगुरुमन्वहमाश्रयेऽहम्" इति वन्दनां दृष्ट्वा तस्य शृङ्गेरीमठाधीशपतेः पूर्वनाम श्रीविष्णुस्वाम्या[1] सीदित्यनु मानेन तस्य विष्णुस्वामिनः चरम सीमा १२२८-१३३३ खृीष्टाब्दपर्यन्ता अथवा (वि० सं० १२८५-१३९०) पर्यन्तेति कथ्यते।

३—परन्तु मनुसंहितायां मेधातिथिकृतभाष्योक्त्या[2] श्रीसर्वज्ञ विष्णुस्वामी खृीष्टीय ११ शताब्द्यां तदनुसारं वि० सं० ११५७ संवतसरात् पूर्वमेव जातो भवेदिति सुस्पष्टभावेनप्रमाणितं भवति।

श्रीमता श्रीधरस्वामिपादेनोद्धृतेषु वचनेषु श्री सर्वज्ञविष्णुस्वामिनो यन्मतं प्राप्यते तस्मात् ज्ञायते श्री सर्वज्ञविष्णुस्वामिपादः सच्चिदानन्द पर-

---

१—पूर्वनाम्ना श्रीविष्णुस्वामिनामधारिणा केनचित् वि० सं० १२८५-१३९० पर्यन्तं शृङ्गेरीमठाधीशपदमधिष्ठितमिति प्रसिद्धम्।

२—"अथो यावतो काश्चित् फलश्रुतिः सा सर्वार्थवाद कोवर विष्णु स्वामी" मनु संहिता ६।२५३ मेधातिथिकृत भाष्यं वसुमती ४र्थं संस्करणं कलिक १३३६ बङ्गाब्दीय।। अयं महाभाग पूर्वमीमांसाया भाष्यकार आसीत् केवल "कोरव" शब्दात् कावेरी तटवासीति मन्यन्ते।

मेश्वरस्य श्री नृसिंहस्य स्वरूपशक्तिमुररीचकार। प्रमाणस्वरूपं श्री श्रीधरस्वामिकृता विष्णु पुराण (१।१२।१०) आत्मप्रकाशिकाटीका। तथाभावार्थ दीपिका (भा० १।७।६ टीकोद्धृतं श्री विष्णुस्वामिवाक्यं द्रष्टव्यम् श्रीधर-स्वामिपादः श्री सर्वज्ञ विष्णुस्वामिनो वाक्यं प्रमाणयति—

ईश्वरस्यैका स्वरूपभूताशक्तिरेवाह्लाद कारिणी सन्धिनी "भगवद्धाम प्रकाशिनी" तथा संवित् (विद्या शक्तिः सर्वज्ञता शक्तिः) एकमात्रंसर्वाधिष्ठानस्वरूपा परमेश्वरे एव विद्यमाना जीवेषु स्वरूपशक्तिर्नास्ति।

**श्रीविष्णुस्वामिपादानां मतवादस्तथा पाण्डित्यम्।**

ऊहापोह विचारोपरान्तं ज्ञायते यद्-श्रीसर्वज्ञविष्णुस्वामिनो मतं "शुद्धाद्वैतवादः" अस्मिन् ईश्वरस्य शुद्धत्वं तथा भगवत्तनूभजनकारि गणानां च शुद्धत्वं नित्यत्वं स्वीकार पूर्वकं जीवजगन्मायानां तदाश्रयत्व नित्यतन्वा रुपेऽद्वयत्वं स्वीकृतम्।

जीवः—परमात्मनोमायया सम्यक् आवृतः संल्केशनिकराकरो मायालाञ्छितः स्वरूपतश्चेतनसत्वेऽपि दुःखस्याधारः[१] स जीवो बद्ध-मुक्त भेदेन द्विविधः। मुक्तजीवो भगवदीच्छया नित्यशरीरं धारयित्वा भगवत्सेवां करोति। बद्धजीवस्तु संख्यातीतो बहुरिति।[2]

**अस्य ब्रह्म**—सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहः[३] **श्रीनृसिंह।**

अस्य व्यासकृत ब्रह्मसूत्रभाष्यनाम-सर्वज्ञसूक्तिः। ऐतिहय प्रमाणानुसारेण[४] इमे वेदान्तसूत्रभाष्यं (सर्वज्ञसूक्तिः) श्रीगीताभाष्यं, श्रीमद् भगवतभाष्यं, विष्णुरहस्यं, पूर्वमीमांसाभाष्यं, तथा तत्त्वत्रयनामकं ग्रन्थं व्यरचयन्।

सारः—श्रीसर्वज्ञविष्णुस्वामिपादस्य सिद्धान्तसम्बन्धे प्राचीन-लेखकगणेषु श्री श्रीधरस्वामिपादस्य तथा सर्वदर्शनसंग्रहकार श्रीमाधवाचार्यस्य नामोल्लेखो योग्यः।

---

१—भावार्थ दीपिका १।७।६ संख्याधृतं श्रीसर्वज्ञविष्णु स्वामिवाक्यम्।

२—भावार्थ दीपिका (१।७।८) श्रीसर्वज्ञविष्णु स्वामिवाक्यं तथा आत्मप्रकाशिका टीका (१।१२।७०) संख्याधृता सर्वज्ञसूक्तिः।

३—सर्वदर्शनसंग्रहः २५ तमेऽनूद्धृता साकार सिद्धिः।

४—एन् आउट् लाईन ओफ् दि रिलिजियस् लिट्रेचर ओफ् इण्डिया द्वारा डाक्टर जे० एन० फर्कूहार १९२० पी० २३८ द्रष्टव्यम्॥

६. श्री निम्बार्काचार्याः

अस्याचार्यस्य जीवनवृत्तसम्बन्धे बहुविधः सन्देहास्पदो वृत्तान्तः श्रूयते। केनचित् किञ्चित् अपरेणत्वन्यदिति कथ्यते। समस्तवृत्तान्तमाकलय्याचार्यचरणस्य जीवनचरितमत्रोल्लिख्यते।

निम्बार्कसम्प्रदायस्याचार्येण पं. ललित कृष्णगोस्वामिना स्वकीय निम्बार्कवेदान्त[1] ग्रन्थे लिखितम्। [2]दक्षिणदेशे गोदावर्यास्तटे वैदुर्यपत्तनस्य समीपे पण्डरपुरे अरुणमुनेः पत्न्या जयन्तीदेव्या गर्भे कार्त्तिकपूर्णिमायाः सांयकालिकगोधूलिवेलायामयमजनिष्ट। अरुणस्य पुत्रत्वादेवैनमारुणि कथयन्ति जनाः।

श्रीमत्सुन्दरानन्दविद्याविनोदमहाशयेन चोल्लिखितम्[3]— तैलङ्गदेशस्य मङ्गेरपत्तन (मङ्गीपाटन) नगरे तैलङ्गब्राह्मणवंशे श्रीमन्निम्बार्काचार्यस्याविर्भावो बभूव। तस्य पितुर्नाम श्रीअरुणिमुनिस्तथा मातुर्नाम श्रीजयन्ती देवी। कार्त्तिकपूर्णिमातिथौ सायंकाले श्रीविष्णुसुदर्शनचक्रस्यावताररूपेणास्याविर्भाव इति।

---

१—हिन्दीभाषायां लिखितम्।

२—मतान्तरेतैलङ्गदेशे देवनद्यास्तीरस्थसुदर्शनाश्रमे। अन्यमते श्री गोवर्द्धनस्थ निम्बग्रामे। अपरैकस्मिन्मते यमुनातटस्थश्रीवृन्दावने प्रादुर्भावः। डाक्टर आर् जी भण्डारकरेण मन्यते बेलारो जनपदस्य निम्बपुरं निम्बग्राम इति।

३—गौड़ीयदर्शनस्येतिहासवैशिष्ट्य च वङ्गभाषायां लिखितम। ग्रन्थस्य टिप्पण्या तु ज्ञायते।

क—निम्बार्क सम्प्रदायिनां मते भा० १।१९।११ श्लोके परीक्षित्सभायामागतारुणमुनेर्वंशधरोऽयमारुणिरिति।

ख—निम्बार्काचार्यकृतदशश्लोकीय श्रीहरिव्यासकृत "सिद्धान्त कुसुमाञ्जल्याः" टीकायामुल्लेखो वर्तते श्री निम्बार्कस्य पितुर्नाम श्री जगन्नाथः, मातुर्नाम श्रीसरस्वतीति (मुम्बई निर्णयसागर सं० १९२५ खृीष्टाब्दः)।

ग—मतान्तरे प्रादुर्भाव तिथिः—वैशाख-शुक्ल-तृतीयेति।

घ—स्यार् आर्रजि भाण्डारकर महोदयेन वैष्णव-शैव-एवं अन्यान्य धर्म पद्धतिः—वैष्णव जिम् शैवजिम् एण्ड माइनर क्रिलिजियस शिष्टम् ग्रन्थे निम्बार्काचार्यः श्रीमद्रामानुजाचार्यस्य निश्चितपरवर्तीत्युल्लिखितम्। रायबहादुर सुरेशचन्द्रसिंहराय विद्यार्णव एम-ए द्वारा प्रणीतः "हिन्दूधर्मस्याभिव्यक्तिः" २यखण्डस्य ३४६ पृष्ठे (कलिकाता १९४४ खृी०) उक्तं यत्—निम्बार्काचार्येण द्वैताद्वैत मतः स्थापितम्। तस्य जन्म १४२७ खृीष्टाब्दे। (गौ०द० इ० वै० २१३ पृ०)

क आरुणिर्निम्बार्कः

श्रीमद्भागवतप्रथमस्कन्धे परीक्षित्सभायामागतानां मध्ये ।

यथा—

मेधातिथिर्देवल आर्ष्टिषेणो भरद्वाजो गौतमः पिप्पलादः ।
मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च ॥
अन्ये च देवर्षिब्रह्मर्षिवर्य्या राजर्षिवर्य्या 'अरुणादयश्च" ।
नानार्षेयप्रवरान् समेतानभ्यर्च्य राजा शिरसा ववन्दे ॥
(भा० १।१९।१०-११)

इत्यत्र सर्वमहर्षीणां मध्ये 'राजर्षिवर्य्या अरुणादयश्च' इति कथनाद्वयं ज्ञायते अरुणर्षिः राजर्षिरासीदिति । श्रीधरस्वामिना स्वटीका-भावार्थदीपिकायां समुल्लिखितम् ।

"अरुणादयः राजर्षिविशेषेण निर्दिष्टाः" ।

एतेन "अरुणर्षिः" राजर्षिरिति "क्षत्रियः" प्रमाणितो भवति ।

निम्बार्कसम्प्रदायिनः अरुणस्य पुत्रत्वात् आरुणिरिति निम्बार्कं मन्यन्ते । तर्हि श्रीमन्निम्बार्काचार्यो राजर्षिकुले समभवदिति प्रश्नचिह्नं लगति ।

उपनिषदि धौम्यशिष्यः उद्दालकस्तच्छिष्यः आरुणिरितिनाम आयाति यः स्वगुरोः केदारे जलप्रवाहं स्वशरीरप्रसारणनारुणत् स आरुणि किं निम्बार्कः? परीक्षित्सभायामागतारुणस्य पुत्रोऽथवा तस्य वंशधर "आरुणिः" निम्बार्कः कथमपि न सम्भवेत् । यतो निम्बार्को ब्राह्मणवंशोद्भव इति सर्वैः स्वीक्रियते ।

आविर्भाव कालः— निम्बार्काचार्यस्याविर्भावकालः केनापि न स्पष्टीकृतः । परन्तु निम्बार्कसम्प्रदायिवैष्णवानां विशेषतः (श्री० ब्र० कृ० शास्त्रिमिनो) मते भगवान् बादरायणो व्यास रूपेणाविर्भूय ब्रह्मसूत्रस्य रचनां कृत्वा ब्रह्मवादस्य स्थापनार्थं प्रयास चकार । आरुणिरपितत्कालस्याचार्यः । तेन बदरीवने बादरायणस्य सामीप्ये एव ब्रह्मसूत्रस्य वाक्यार्थं कृतः । ब्रह्मसूत्रस्य भाष्यं न हि भाष्यस्य लक्षणम्— 'आक्षिप्य भाषणाद्भाष्यम्' अर्थात् स्वयमाक्षेपं कुर्वन् सिद्धान्तस्य स्थापनाकरणं नाम भाष्यस्य लक्षणम् । इदृशी प्रवृत्तिः (भाष्यस्य प्रवृत्तिः) आचार्यस्य लेखनशैल्यां न दृश्यते[1] ।

---

१—निम्बार्कवेदान्तस्य (हिन्दी भाष्यम्) ५३ तम पृष्ठांको द्रष्टव्यः ।

२ अपरं च तेषां मते श्रीनिम्बार्काचार्यः सुदर्शनस्यावतार रूपेणाविर्भूत इति। श्रीमद्भागवतस्योपाख्याने स्वयं भगवान् श्रीकृष्णो मृतब्राह्मणपुत्रानानेतुं द्वारकातः अर्जुनेन सह चतुरश्वयुक्तरथेउपविश्य प्रतीचीदिशा प्रयाणं चकार यममुरीमार्गोघोरान्धकाराच्छन्न आसीत्। तदन्धकारस्यविनाशक। सहस्रादित्यसदृशः श्रीसुदर्शनचक्रमासीत्[1] येन तेजसाप्रतीचीदिशा समुज्वलिता बभूव। भगवान् श्रीकृष्णोऽर्जुनेन सह श्रीसुदर्शनप्रकाशेन तत्र दिव्यमनन्तरूपं ददर्श[2]। तस्मात्स्थानाद् ब्राह्मण-पुत्रान् नीत्वा परावर्तत। इति भागवती कथा प्रसिद्धा।

एनदुपाख्यानमवलम्ब्य निम्बार्कसम्प्रदायानुयायिभिः श्रीनिम्बार्कः सुदर्शनस्यावतारः सुदर्शनस्य प्रकाशः तेजः। यत्तेजसा श्रीकृष्णोऽर्जुनेन सह प्रतीचीदिशं जगाम तत्तेजः एव श्रीनिम्बार्कस्य ज्ञानस्य प्रकाशः। यः प्रकाशः श्रीधर स्वामि टीकया[3] स्पष्टी भवतीत्पुल्लिखितम्।

परन्तु श्री श्रीधरस्वामिना स्वटीकायां "परं श्रेष्ठं भागवतं ज्योति" रित्यत्र भगवतः इदं भागवतं श्री सुदर्शनं तस्य ज्योतिः परं श्रेष्ठमित्याशयेन कथित न तु सुदर्शनस्यावतारत्वेन श्रीनिम्बार्काचार्यस्य ज्ञानस्य प्रकाशो ज्योतिरिरिति। इत्यादि स्व कपोलकल्पितं श्रीकृष्णायुधसुदर्शवस्य समकालिकं श्रीमन्निम्बार्काचार्यं मत्वा तथा च श्रीमन्निम्बार्काचार्यं श्रीनारदस्य साक्षाच्छिष्यत्वेन स्वीकृत्य श्री निम्बार्काचार्यस्याविर्भावसमयं श्रीगौतमबुद्धस्याविर्भावकालात् प्रायः ५६६ खीष्टाब्दात् (तदनुसार ६२३ विक्रमाब्दा) पूर्वं) मन्यन्ते। तत्सम्प्रदायस्यान्येर्षां मतेन श्रीमन्निम्बार्काचार्यस्य१०४७-४८ तमशताब्दी[4]। आविर्भावकालो वर्तते।परश्रूयते यच्छ्री शङ्कराचार्य श्रीमध्वाचार्ययोरुभयो राविर्भावकालयं मध्यो प्रायः पञ्च संख्यक शताब्दी व्यवधानं वर्तते नयाप्युभौ श्रीव्यासदेवस्य साक्षात्कारंलब्धवन्तौ। यतः श्रीमन्नार-

---

१—सहस्रादित्य सकाशं स्वचक्रं प्राहिणोत्पुरः (भा० १०।८६।५०।

२—ददर्श तद् भोगसुखासन विभुं महानुभावं पुरुषोत्तमोत्तमम् (भा० १०। ८६।५५)।

३—परं श्रेष्ठ भागवतं ज्योतिः (भावार्थ दीपिका श्रीधरी टीका भा० १०। ८६।५२।

४—१९५३ खीष्टाब्दे लिखितं वङ्गभाषायां गौड़ीय दर्शनस्येतिहास वैशिष्टयं च "इति ग्रन्थे चेल्लिखितम्।"

इस्तथा श्रीमद्व्यासप्रमुखमहाभागवतगणास्त्रिकालसिद्धा नित्यामराश्च।
श्रीमन्मध्वाचार्यस्य श्रीबदरिकाश्रमे श्रीव्यासदेवस्य साक्षात्कारलाभे जातेऽपि माध्ववैष्णवाः श्रीमन्मध्वाचार्यस्याविर्भावकालं ख्रीष्टीय शताब्दी १२३८ तदनुसारं वि० सं० १२९५ मन्यन्ते। परं पूर्वोक्त श्रीमन्निम्बार्काचार्यस्याविर्भावकालसम्बन्धे तदनुयायिभिर्यदुल्लिखितं तत् श्रीमन्निम्बार्काचार्यस्य [गोपुरर्शनावतारत्वेन] भगवदायुधस्य श्रीसुदर्शनस्याविर्भाव कालात्परिगणने सम्भवेदिति। परमीदृशीसम्भावना न समीचीना प्रमाणाभावात्।

३—अपरं च श्रीमल्ललित कृ० गोस्वामिना लिखितम् आरुणिना (निम्बार्केण) यो भक्तिरसो बादरायणसूत्रस्य वाक्यार्थे प्रवाहितस्तं भक्तिरसमेव वादरायणो भागवतरूपेण प्रकटयित्वा शुकरूपिण श्रीआरुणि मध्यापयामास[1] ———विचार्यतामीदृशीक्लिष्ट कल्पना स्वसम्प्रदायमूलाचार्यस्योत्कर्षवर्द्धनं सर्वप्राचीनत्वप्रकाशनादन्यत् नास्ति किमपि।

४—तथा अन्यच्च ई० पूर्वीया द्वितीय प्रशाब्द्यां नारायण वाटिकाया अवशेषेचित्तौर राजस्थानस्य निकटेप्राप्तेशिलालेखे वासुदेवश्रीकृष्ण सर्वेश्वरमिति स्वीकृतम्। अयं शिलालेखः पुष्यमित्र शुंगकालस्य ध्वंसावशेष इति। एतेनाचार्य ल० कृ० गोस्वामिनोक्तम् "आरुणिना (श्री निम्बार्केण) तथा श्रीविष्णु स्वामिना या उपासना ई० पूर्वी चतुर्थशताब्द्यां प्रचारिता सा श्रीशङ्कराचार्यस्य कालपर्यन्तं नैरन्तर्येण परम्परया प्रचलिता आसीदिति"।[2]

परमैतिह्यप्रमाणेन श्रीमन्निम्बार्कविष्णुस्वामिपादयोः ई० पू० ४र्थशताब्द्यां आविर्भावे न बभूव। तयोः कालः श्री शङ्कराचार्यस्य परवर्तीति। शिलालेखे श्रीकृष्णस्य सर्वेश्वरत्वकथनं पुष्यमित्रशुंगस्य परमभागवतत्वप्रभावाल्लिखितं वर्तते व तु निम्बार्कविष्णुस्वामिनोरुपासनाप्रभावदिति।

भविष्यपुराणोक्त श्लोके[3] निम्बार्को भगवनेषां" उक्तत्वान्निम्बार्क सम्प्रदायानुगताः सर्वे निम्बार्काचार्यं भगवन्तं मन्यन्ते, परमुक्त निम्बार्कशब्दस्य हिमाद्रिणा १२६०-१३०९ ख्रीष्टाब्दे तदनुसारं १३१७—१३६६ वि०

---

१—निम्बार्कवेदान्तभूमिकायाः ६४ तमे पृष्ठे द्रष्टव्यम्।

२—उक्तग्रंथभूमिकाव्याः ८० तमेपृष्टे द्रष्टव्यम्।

३—उदयव्यापिनीग्राह्या कुले तिथि रुपोषणे।
निम्बार्को भगवानेषां वाञ्छितार्थफलप्रदः॥

पाठान्तरम् —सर्वाप्योदयिकी ग्राह्या कुले तिथिरुपोषणे।
निम्बार्को भगवानेषां वाञ्छितार्थप्रदायकः॥

सं० स्वकृतचतुर्वर्गचिन्तामणिग्रन्थे सूर्यव्रतप्रसङ्गे भविष्यपुराणस्थोक्त-श्लोकमुद्धृत्य सूर्यविशेषस्य नाम एव निम्बार्कोऽथवा निम्बादित्य इति कथ्यते। परवर्तिकालेऽपि श्रीकमलाकरभट्टस्य निर्णयसिन्धुः (१६१२ खृष्टाब्दे तदनुसारं १६६९ वि० सं० रचितः) हिमाद्रेश्चतुर्वर्गचिन्तामणेर्व्रत-खण्डोद्धृत भविष्यपुराणस्योक्तश्लोक मुद्धृत्य निर्णयसिन्धुकारेण "निम्बादि-त्योपासका" इति कथनेन श्रीमन्निम्बर्काचार्यस्यानुगसम्प्रदायो न लक्ष्यी-कृतः, तत्र निम्बार्कनामकसूर्यविशेषस्योपासकगणानेवोद्दिश्य तद्वाक्य मुल्लिखितम्। अपि च कमलाकर भट्टमहाशयेन निर्णयसिन्धोरुपसंहारे— "इदानीं क्वापि निम्बार्कोपासनाभावाच्चेति संक्षेपः" अर्थात् साम्प्रतिकं कुत्रापि निम्बार्कोपासना प्रचलिता नास्ति। १६६९ वि० सं० रचित निर्णय सिन्धुसमये कुत्रापि द्वैताद्वैतवादाचार्यस्य श्रीमन्निम्बार्काचार्योपासनायाः अस्तित्वं नासीत्। अतो हिमाद्रिणा वा कमलाकरभट्टेन स्वकीयग्रन्थे यन्निम्बादित्यस्य नामोल्लिखितं तन्नाम सुनिश्चितमाचार्यनिम्बार्कस्य वा निम्बादित्यस्य नास्ति, इदं प्रकृष्टरूपेण प्रमाणितम्।

अपरं च श्रीमन्निम्बार्काचार्यनाम्न्यारोपितस्तद्रचितः "स्वधर्माध्व-बोधः"[1] इति हस्तलिखित पुस्तकेऽपि भविष्यपुराणस्थोक्तश्लोके वर्तते। उदयव्यापिनी ग्राह्या कुले इत्यादि—श्लोके (निम्बार्को भगवानेषां वाञ्छितार्थ फलप्रदः) इत्यस्य सामान्यपाठान्तरसहितोद्धृतोऽस्ति। निम्बार्क सम्प्रदायिनां मते व्रतेषू[2] दयांतिथिं ये गृहस्था मन्यन्ते तत्र भगवान् निम्बार्को मनोवाञ्छितंफलं प्रददाति। अत्र ते निम्बार्काचार्यस्य तात्पर्यं गृहणन्ति, वस्तुतस्तु नेदम्।

---

१—कलिकाता एशियाटिक सोसाईटी पुस्तकालये (पु० सं० III जी १३६ बङ्गाक्षरे लिपिबद्ध" इति गोड़ीयवैष्णवदर्शनस्यैतिहासवैशिष्ट्यं च' इति ग्रन्थे, उल्लिखितः ॥

२—प्रायः सर्ववैष्णवाः श्रीकृष्णा जन्माष्टमी, रामनवमी, नृसिंह चतुर्दशी, शिवरात्र्यादि व्रतेषु उदयिकीं (उदयाव्यापिनीं तिथिं गृहणन्ति। अद्यतनतिथिसम्बन्धे पातञ्जलमहाभाष्ये—अद्यतनेलङ् ३।२।११ पा० सूत्रोपरि पतञ्जलिना "अतीतायाः रात्रेः पूर्वयामद्वयं दिवसश्च सकल एषोऽद्यतन कालः" इत्युक्तम्। कमलाकर भट्टेनोक्तम्—हिमाद्रौ तु केषाञ्चिदर्द्धरात्रेऽपि दशमीवेधमाह—अर्द्धरात्रेतु केषाञ्चिद् दशम्यां वेध उच्यते। कपालवेध इत्याहुराचार्या ये हरि-प्रियाः (हरिप्रिया शब्देन वैष्णवाः इति बोद्धयाः)।

यथा हि—दाक्षिणात्ये हायद्रावादान्तर्गत आलिहावादो वर्तते। तस्मात्प्रायः त्रिकोशदूरे दक्षिणपूर्वदिशि (आग्नेय कोणे) उदयादित्यस्य विशेष कर्मचारि लोलार्कस्य पत्नी पद्मावत्या वि० सं० ११११—११६३ शताब्द्यां आविष्कृत जयनाद (जयनाथ) शिलालिप्यानुसारेण निम्बादित्य प्रासादो निर्मितः। उदयादित्यः लोलार्क प्रभृति नाम्ना ज्ञायते। ते सूर्योपासका आसन्। उक्तशिलालिप्याम्—ॐ नमः सूर्याय,

अकालेऽपि रवेर्वारे निम्बपुष्पोद्गमैर्यम्।

प्रत्ययं पूरयन् भानुर्निरतायमुपास्यताम्॥

अर्थात् सकलाभीष्टपरिपूर्णकारि सूर्यदेवं अकाले निर्विघ्नकाले रविवासरे निम्बवृक्षस्य पवित्रपत्रपुष्पादिना नियमितमुपासनां कुरु इत्युल्लिखितम्।

एतेन ज्ञायते यत् पुरा हिन्दूमहिलाः पतिपुत्र परमायुस्कामनार्थं श्रीसूर्योपासनां कुर्वन्तिस्म। सम्भाव्यते लोलार्कसहधर्मिणी पद्मावती निम्बादित्यनामक सूर्यविशेषस्य प्रासाद (मन्दिर)—निर्माणं कारयामास। उक्तं च भविष्यपुराणे—

"निम्बश्च सूर्य देवस्य वल्लभं दुर्लभं तथा"[1] निम्बवृक्षस्तथा तज्जातपत्रपुष्पादयः सूर्यदेवस्य विशेषप्रियास्तेन निम्बवृक्षोऽपि सूर्यस्य प्रतीक रूपेण नमस्यः। पूर्वोक्तहिमाद्रिः वि० सं० १३१७—१३६६ शताब्द्यां स्वकृतचतुर्वर्ग चिन्तामणौ व्रतखण्डे सूर्यव्रत प्रसङ्गे च भविष्यपुराणोक्त—उदयव्यापिनीग्राह्या इत्यादिश्लोक[2]मुद्धृत्य सूर्यविशेषस्य नाम एव निम्बार्कोऽथवा निम्बादित्य इति विज्ञापयामास। नत्वाचार्यप्रवरनिम्बार्कः। अनेन श्लोकस्थनिम्बार्कशब्देन, सनकसम्प्रदायाचार्यप्रवरश्रीमन्निम्बार्काचार्यस्यार्थग्राहिणः परास्ताः।

५—अपरं च श्रीमन्निम्बार्काचार्यस्य समसामायिकतच्छिष्य श्रीनिवासस्य भाष्ये श्रीशङ्करश्रीरामानुजश्रीमध्वप्रमुखाचार्यगणानां भाष्यपरिभाष्य स्तद्भवानां च यथेष्टोल्लेखः परिदृढो भवति। अनेनापि श्रीमन्निम्बार्काचार्यस्य कालखण्डः श्रीमध्वाचार्यादीनां परवर्तीति प्रमाणितं भवति।

आधुनिकगवेषकगणानां मन्तव्ये स्वयं श्रीमन्निम्बार्काचार्यस्य भाष्ये (वाक्यार्थे) अपि श्रीरामानुजीयस्य तथा माध्वदर्शनस्य भावभाषादीनामनुकरणं प्रस्फुटितमभूत्[3]। १६६९ वि० सं० बद्यावधि द्वैताद्वैत (भेदा-

---

१—भविष्यपुराणोत्तरपर्वम ८८ अध्यायः ५-७ श्लोकाः।
२—चतुर्वर्ग चिन्तामणिव्रत खण्डे ११ अ० १८४ पृष्ठे।
३—गौड़ीय दर्शनस्येतिहासवैशिष्ट्यं च पृ० सं० २०९।

भेद) वादिनः श्रीमन्निम्बार्कस्योपासनानुल्लेखात् ज्ञायते यदस्याचार्यस्य काल १६६६ वि० सं० परवर्तीति प्रतीयते।

यद्भवतु, कस्यचिदाचार्यस्य मर्त्ये प्रादुर्भाबस्य प्राचीनतार्वाचीनतोपरि तस्य माहात्म्यस्य वृद्धिःह्रासश्च भवितुं नार्हतः। अतो यावच्छ्रीमन्निम्बार्काचार्यस्याभ्युदयकालसम्बन्धी कश्चिदखण्डनीयप्रमाणं न प्राप्यते तावन्मस्तिष्कस्य विवदमानयुक्तितर्कयोर्विस्तारं न कृत्वा श्रीमन्नाचार्यचरणस्यान्यावदान सम्बन्ध्यालोचनां श्रेयस्करीं मन्ये।

**कथं निम्बार्क नाम—**

कस्यचिन्मानवस्य स्थान काल पात्र कर्मभिस्तस्य बिशेषता ज्ञायते। यथा सर्वेजनाः समाकृष्टा भवन्ति। विशेषतो महापुरुषाणां जीबनवृत्तेनैवंविधां घटनां घटयति। प्रस्तुतप्रसङ्गे श्रीमन्निम्बार्काचार्यचरणस्य स्थान कालयोः सम्बन्धे सन्देहात्मके सति अद्भुत कर्मकौशलेन सः लोकोत्तर पात्रत्वात्तनुदरूपं नाम चाप्यवाप।

किंवदन्त्यनुसारं यदाचार्यप्रवरः श्रीमद्वृन्दानवस्थ श्रीगोवर्द्धनसमीये निम्बग्रामपर्णकुटीरमध्ये श्रीहरिभजनपूर्वकं न्युवास, तदैकजैन संन्यासी मथुराभिमुखात्तत्र दिग्विजयार्थमुपतस्थौ। आचार्यप्रवरस्तं यतिं समादरपूर्वकमाहूय परस्परं दार्शनिकविचारविमर्शं प्रारेभे। शास्त्रार्थं कुर्बतोस्तयोः सूर्यो ऽस्ताचलमुपगतः। ततः सन्ध्योपरान्तमाचार्येण प्रदत्तांभोज्य सायग्रीं जैन विधानुसारं यतिः रात्रौ न गृहीतवान्। तदाचार्य प्रवरः स्वस्याश्रमस्थितैकनिम्बवृक्षमारुह्य योगवलेनातत्रासीनो भूत्वाऽतिथेर्भोजनसमाप्तिकालपर्यन्तं श्री सूर्यदेवमस्ताचलचलनात्संरुरोध। अचिन्त्यभेदाभेदवादाख्यग्रन्थानुसारं स निम्बवृक्षोपरि चारुह्ययाकाशे सुदर्शनचक्रसंस्थापनात्तच्चक्रमेवसूर्यसदृश्पं प्रभायुक्तं दृष्ट्वा तेन यतिना तस्मिन्काले भोजनं कृतमेव। तदाप्रभृति निम्बार्कोऽथवा निम्बादित्यः, इति नाम्ना आचार्यः प्रथितः।

**श्रीमन्निम्बार्करचितग्रन्थावली**

१—ब्रह्मसूत्रस्य वेदान्तपारिजातसौरभमामकं संक्षिप्त भाष्यम्।

२—दशश्लोकीय सिद्धान्तरत्नं वेदान्तकामधेनु।

३—सविशेष निर्विशेष श्रीकृष्णस्तवराजः (पञ्चविंशतिश्लोकात्मकं श्रीकृष्णास्तोत्रम्)।

४—रहस्य मीमांसा।

५—प्रातः स्मरणस्तोत्रम्।

६—ऐतिह्य तत्त्वराद्धान्तः।

७—पञ्चसंस्कारविधिः।

८—सदाचारप्रकाशः।

९—श्रीमद्भगवद्गीताभाष्यम्।

१०—प्रपत्तिचिन्तामणिः।

११—श्रुतिसिद्धान्तः।

१२—स्वधर्माध्वबोधः (तन्नाम्न्यारोपितः)

**श्रीमन्निम्बार्काचार्यस्य मतवादः**

वास्तवोऽथवा स्वाभाविकः—"भेदाभेदवादः"। यस्मिन् ब्रह्मणि तथा जीवेजगति च स्वरूपतस्तथा धर्मतोभिन्नाभिन्नत्वम्, अर्थात् भेदस्तथाऽभेदः समभावे सत्यः नित्यमविरुद्धस्तथा स्वाभाविकः। उक्तम् तस्यसारः।

अस्य ब्रह्मसूत्रभाष्यनाम— वेदान्तपारिजात सौरभम्।

**अस्य ब्रह्म**—अनन्ताचिन्त्य[1] स्वाभाविकस्व रूपगुणशक्त्यादिभिर्बृहत्तमरमाकान्तः पुरुषोत्तम एव ब्रह्म। स्वभावतो निरस्तसमस्तदोषोऽशेषकल्याणगुणैकराशिव्यूहयुक्त श्रीकृष्ण एव परब्रह्म[2]।

**जीवः**—परमात्मनोऽशंः। जीवात्मा परमात्मनोऽशांऽशिभावो भेदाभेद सम्बन्धः। जीव आनन्द स्वरूपः। देहेन्द्रियादेः सम्पूर्णभिन्नः। ज्ञानस्वरूप सत्त्वेऽपि ज्ञान वान् कर्त्ताभोक्ता, अज्ञः, नित्यः अणुः बहुस्तथानन्तः, बद्धमुक्तभेदेजीवोद्विविधः।।

**जगत्**—जगत्--कार्यम्। ब्रह्मकारणम्। ब्रह्मशक्तिमत् जोवोजगच्च तस्य शक्तिद्वयम्। ब्रह्म जगन्मध्ये स्वभाव धर्मगत भेदो वर्तते। ब्रह्म चेतनमस्थूलमजडं नित्यं शुद्धं च। जगत्तु अचेतनं स्थूलं जडमशुद्धं च। सुतरां ब्रह्मजगतोर्मध्ये स्वाभाविकः भेदः। पुनश्चोभयोः स्वाभाविकोऽभेदस्तथा समभावे सत्यम्।

**कार्यम्**—कारणात्मकं कारणसत्तामयं तथा कारणाश्रयत्वात्कार्यं जगत् कारणं ब्रह्मणोऽभिन्नम्। जगत् प्रकृतेः परिणामस्तथा प्रकृतिर्ब्रह्मणोऽशः शक्तिश्च। जगत् सृष्टेः पूर्वं ब्रह्मणः सूक्ष्मशक्तिरूपे तथा सृष्टिकाले ब्रह्मणो वास्तविक परिणामरूपे नित्यं सत्यं च।

**माया**—प्रधानपदवाच्या त्रिगुणमयी च[3]।

---

१—निम्बार्क-भाष्यम् १।१।१

२—वेदान्त कामधेनुः चतुर्थश्लोकः।।

३—वेदान्त कामधेनोस्तृतीयश्लोकः।

७—श्रीरामानन्दस्वामी

श्रीतीर्थराजप्रयागे काश्यपगोत्रीयकान्यकुब्जब्राह्मणस्य गृहे वि० सं० १३५६ शताब्दयां माघकृष्णसप्तम्यां बृहस्पतिवासरे श्रीरामानन्द-स्वामिनः शुभाविर्भावो बभूव[1] । अन्यगवेषकाणां मते खृष्टीयपञ्च-शताब्द्याः (वि० सं० १५५७) शताब्द्याः प्रथमभागे श्रीस्वामिनः शुभा-विर्भाव आसीत्[2] केषाञ्चित् कथनानुसारं तस्य पूर्वनाम श्रीरामदत्त आसीत् । स प्रयागात्काशीं गत्वा शङ्करवेदान्तशास्त्रस्याध्ययनं कृत्वा श्रीशङ्कर सम्प्रदायादेकदण्डिसंन्यासं गृहीत्वा "श्रीराम भारती" नाम्ना परिचितः[3] ततश्च श्रीरामानुजसम्प्रदायस्य श्रीराघवानन्दस्वामिनः सत्सङ्गफलेन श्रीवैष्णवधर्मस्य श्रेष्ठत्वमुपलभ्य तस्मात्षडक्षररराममन्त्रं गृहीत्वा तथा पञ्चसंस्कारेण संस्कृतोभूत्वा "श्रीरामानन्ददासः" इति नामाभिधेयं प्राप्तम् ।

श्रीरामानन्दो योग साधनयाऽनेक धा सिद्धिलाभं चकार । खृी० १४२५ वि० सं० १४८२) शताद्ब्यामुत्पन्नो गङ्गारोणगढ़स्य नृपः "पीपाजी" तत्संगत्या राज्यादिपरित्यागपूर्वकं तदनुगमनं स्वीचकार । श्रीरामानन्द-स्वामिना दिग्विजयार्थं बर्हिर्गत्वा जैनवैष्णवमतसमूहा खण्डितः । ततः काशीं गत्वा तत्र स्थायिरूपेण निवासं चक्रे । रामानन्द दिग्विजयमतानुसारेण जगति तेनाष्टचत्वारिंशदुत्तरैक शत (१४८) संबत्सरमुपतस्थौ । वि० सं० १५०५ तमे वर्षे वैशाख-शुक्ल-तृतीयातिथौ साकेतधाम्नि तत्तिरोभावो बभूव । श्रीरामानन्द-जन्मोत्सव-लेखकमते[4] वि० सं० १४६७ तमे बर्षे चैत्र शुक्ल तृतीया तिथौ तस्य निर्वाणो बमूव ।

---

१—नभाजी कृत हिन्दी भक्तामलस्य वार्तिकप्रकाशटीकाकारः (२७३ पृ०) तथा श्रीरामानन्द दिग्विजय (१५ पृष्ठम्) रचयितुस्त्रिवेदि भगवद्दास ब्रह्मचारिणो मतम् ।

२—डक्टर फर्कूहारेण खृी १४००-१४७० निरुपितम् ।

३—श्री गोपालदास जी कृत वैष्णव धर्म रत्नाकरः' (संस्कृत तथा हिन्दी) मुम्बई लक्ष्मी वेङ्कटेश्वर सं० ८४ तथा ६८ पृ० २८५४ शकाब्दः द्रष्टव्यः ।

४—श्रीरामानन्द-जन्मोत्सवः (अगस्त्यसंहितान्तर्गतः) पं० रामनारायण दास कृत भाषा टीका सह ४६ पृ० रण हर पुस्तकालयः डाकौर १८२६ शकाब्दाः (१६५३ खृी० गौड़ोय दर्शनस्येतिहास वै० बंगभाषा २३१ पृष्ठोल्लेखानुसारम् )

गुर्जरभाषायां लिखिते रामानन्दधर्मप्रकाशनामके श्रीरामानन्द चरितग्रन्थे दृष्टं भवति यत्-श्रीरामानन्देन काश्यां गिरिजाशङ्करनामकस्य शैवसंन्यासिनः समीपे संन्याससंस्कारं लब्ध्वा श्रीरामभारतीति नाम्ना प्रसिद्धः। यदा स शिष्यवर्गैः सह दक्षिणापथे प्रचारार्थं ययौ, तदा—दाक्षिणात्याः श्री वैष्णवाचार्यास्तं "पतितोपदेष्टा" इति कथयन्तः स्व-सम्प्रदायाद्बहिष्कृतवन्तः। एतेन श्रीराघवानन्दः स्वशिष्यरामानन्दं तन्नामानुसारेण स्वतन्त्रसम्प्रदायप्रवर्तनार्थमादिदेश। परन्त्वपरैकश्रेणीस्थ रामानन्दिवैष्णवा इदमस्वीकुर्वन्ति कथयन्ति च श्रीरामानन्दः श्रीरामावतारः। सुतरां स ऊर्ध्वतनाचार्यस्याधीनतामस्वीकृत्य स्वतन्त्र-सम्प्रदाय-प्रवर्तनं कर्तुं शक्नोति[1]

**श्रीरामानन्दस्य गुरुपरम्परा**

श्रीमद्रामानुजाचार्याद्रामानन्दपर्यन्तम्— १—श्रीमद्रामानुजाचार्यः २—गोविन्दः, ३—कुरेशः, ४—पराशरः, ५—निगमान्तयोगी, ६—लोकाचार्यः, ७—देवाधिपाचार्यः, ८—शैलेशः ९—वरवरमुनिः, १० पुरुषोत्तमः, ११-गङ्गाधरः १२—सदाचार्यः, १३—रामेश्वरः, १४—द्वारानन्दः, १५—देवानन्दः, १६—श्यामानन्दः, १७—श्रुतानन्दः, १८—नित्यानन्दः; १९—पूर्णानन्दः, २०—श्रियानन्दः, २१—हरियानन्दः, २२—राघवानन्दः, २३—रामानन्दः।

**श्रीरामानन्दकृत-ग्रन्थावली**

श्रीरामानन्दस्वामिनो विशिष्टाद्वैतमतप्रतिपादकं ब्रह्मसूत्रभाष्यम् १—आनन्दभाष्यम्, २—वैष्णवमताब्जभास्करः (दार्शनिकग्रंथः) ३—रामरक्षानामकैकं स्वल्पाकारपुस्तकम्। एतद्व्यतिरिक्तं रामतापन्युपनिषद्, वाल्मीकिरामायणम्, अगस्त्यसंहिता, अध्यात्मरामायणम्, अद्भुतरामायणम्, रामपटलः, रामपद्धतिः, श्रीरामसहस्रनामस्तोत्रम्, तथा रामस्तवराजप्रभृतिग्रन्थाः रामानन्दिसम्प्रदायमतपोषकप्रामाणिकग्रन्थत्वाद्विवेचिताः सन्ति। श्रीनारदपाञ्चरात्रादिसात्वतपाञ्चरात्रमपि तेन स्वीकृतम्।

---

१—वङ्गभाषायां लिखितं (खृ० १९५२ तमे) गौड़ीयदर्शनस्येतिहास वै० २११ पृ० द्रष्टव्यम्।

**श्रीरामानन्दस्य मतवाद:—**

(क) "एवञ्चाखिलश्रुतिस्मृतीतिहासपुराणसामञ्जस्यादुपपत्ति बलाच्च विशिष्टाद्वैतमेवास्य ब्रह्ममीमांसा-शास्त्रस्यविषयो न तु केवलाद्वैतम्[1]।"

अर्थात्—श्रीरामानन्दमते ब्रह्ममीमांसा—विषये विशिष्टाद्वैत-सिद्धान्त एव समस्तश्रुतिस्मृतीतिहासपुराणादिशास्त्रसमन्वितो भवति। केवलाद्वैतमते समस्तशास्त्राणां समन्वयो न भवति।

(ख) ब्रह्मशब्दश्च महापुरुषादिपदवेदनीय निरस्तनिखिलदोष-मनवधिकातिशयासंख्येयकल्याणगुणगणं भगवन्तं "राममाह"।[2]

अर्थात्—"श्री रामचन्द्र" एव ब्रह्मशब्द वाच्यः। स महापुरुषादि शब्देन विदितः। निखिलदोषान्नित्यनिर्मुक्तस्तथाऽसोर्ध्व, अशेषासंख्य-कल्याणगुणानामाकरो भगवान्।

(ग) एवञ्च सर्वज्ञ—सर्वशक्तिमज्जगत्कारणनिर्गुणसगुणादिपद-वाच्यं श्रीरामतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यतेऽनेन सूत्रेण।[3]

अर्थात्—स सर्वज्ञस्तथा सर्वशक्तिमान्जगत्कारणं तथैकाधारे निर्गुणः सगुणश्च "जन्माद्यस्य यतः" इत्यस्मिन्सूत्रे स राम एव जगत्कारण ब्रह्मरूपेणोक्तम्।

(घ निर्गता निकृष्टासत्त्वादयः प्राकृता गुणा यस्मात्तन्निर्गुणमिति व्युत्पत्तेर्निकृष्टः गुण राहित्यमेव निर्गुणत्वम्।[4]

अर्थात्—सगुणकथनेन स दिव्योऽतिमर्त्यगुणशाली वर्तते, तथा निर्गुणकथनेन तस्मात्सत्त्वादि प्राकृतगुणसमूहो नित्यनिर्गत एव बोध्य।

(ङ) दिव्यगुणवत्त्वेन च सगुणत्वमित्युभयथैकस्यैव ब्रह्मणो निर्देश इति न किञ्चिदनुपपन्नम, एवञ्चास्याः शारीरक ब्रह्ममीमांसाया उपक्रमोप सहारयोर्ब्रह्मणः शेषित्वसगुण त्वादि प्रतिपादक तया तन्मध्यभूतानामपि सूत्राणां त्वा सगुण सन्दशपतितन्यायेन तत्प्रतिपादकत्व मेवेति मन्तव्यम्![5]

---

१—ब्रह्मसूत्रम् १।१।१ आनन्द भाष्यम् २-५ तत्रैव रामदास गौड़ सम्पादित हिन्दुत्व १ म संख्या काशी (१९९५ वि० सं०) नामक ग्रन्थोक्त स्वाभि-रामानन्दजी प्रबन्धः पं० वैष्णवदास त्रिवेदी न्यायरत्न वेदान्त तीर्थेन लिखितः कल्याणपत्रोद्धृत ६९१-६९७ पृ० (गो० द० ३० वै० खी १९५३ तमे बङ्गभाषामुद्रितोल्लेखानुसारम्।)

अर्थात्—निकृष्टप्राकृतगुणराहित्यमेव तस्य (ब्रह्मणः) निर्गुणता तथा च दिव्यगुणशालित्वम् एव तस्य (ब्रह्मणः) सगुणता। निर्गुणता-सगुणतयोरुभयोः क्रमशः प्राकृतगुणनिषेधकस्तथाऽप्राकृतगुणव्यञ्जकः, इति शारीरकब्रह्ममीमांसाया उपक्रमोपसंहारयोः समग्रवेदान्तदर्शने सगुणब्रह्म एव प्रतिपादितमस्ति।

श्रीरामानन्दस्वामिनो मते श्रीरामचन्द्र एव जगतोऽभिन्ननिमित्तो पादानकारणम्। जीवगणानां मध्ये परस्परं भेदो वर्तमानः। जीवः स्वरूपतोऽणुकर्तृभोक्तृज्ञातृनित्यत्वेन स्वीकृतः। तेन विवर्तवादं (जगन्मिथ्या-वादं) खण्डयित्वा सख्यादिवादः स्वीकृतः। कर्म भक्तेरङ्गं तथा भक्तिप्रपत्ती उपायाविति निगदितम्। तेन सद्योमुक्तिरस्वीकृता। तेन च वेदस्याऽपौरु-षेयत्वं मेने, नारदपाञ्चरात्रं प्रमाणत्वेन स्वीकृतम्।[1]

विशेषतः श्रीरामानन्दस्वामिनो भक्तिरुपायोऽथवा साधनम्, मोक्ष उपेयोऽथवा साध्य इति कथनेन तन्मतं श्रीमद्भागवतसिद्धान्तानुसारं शुद्ध-भक्तियोग्यं न वेति विचारणीयम्। यतः श्रीमद्भागवते मोक्षाभिसन्धि-रहितशुद्धभक्तिरेव साध्यत्वेनोक्ता, तत्सिद्धान्तोपस्थापिता च।[2]

**श्रीरामानन्दस्य शिष्यपरम्परा :—**

अनेन बहवः शिष्याः कृतास्तेषु प्रमुखा द्वादशशिष्याः, तत्सम्प्रदायलेख-कानां मते विभिन्नदेवतास्तथा दिव्यसूरेरवताराः सन्ति।

यथा—१—अनन्तानन्दः, २—सुरानन्दः, ३—सुखानन्दः, ४—नर-हरिः, ५—योगानन्दः, ६ पीपा, ७ कबीरः, ८ भवानन्दः, ९—सेन भक्तः, १०—धना, ११—गालवः, १२—रमानन्दः (रैदासः)।

---

१—श्रीरामदास गौड सम्पादिता "हिन्दुत्व"—६८४—६८७ पृष्ठे।

२—सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥ (भा॰ ३।२९।१३)

अर्थात् मदीया जनाः सालोक्यादिकमपि उत दीयमानमपि न गृह्णन्ति मत्सेवनं विनेति। चेत्तर्हि मत्सेवनार्थमेव गृह्णन्ति न तु तदर्थ मेवेत्यर्थः। सार्ष्टिः समानैश्वर्यं, सालोक्यं, मया सह एकस्मिन् लोके वासः, सामीप्यं निकटवर्त्तित्वम्, सारूप्यं समानरूपतां। गृह्णन्ति एकत्वं भगवत्सायुज्यं ब्रह्म सायुज्यञ्च। अनयोस्तल्लीला-त्मकत्वेन तत्सेवनार्थत्वाभावादग्रहणावश्यकत्वमेवेति भावः।

(इति क्रमसन्दर्भे श्रीमज्जीवगोस्वामिचरणाः)

एषु शिष्येषु कबीरस्य मते [निर्विशेषोपलब्धिरेव चरमलक्ष्यमस्ति। अतः—आधुनिकरामानन्दिगणाः द्वयोः कबीरयोः कल्पनां कृत्वा निर्विशेषवादिकबीरस्य कबीरपन्थिगणानां प्रवर्तकंतथा पूर्ववर्तिमूलकबीरम् अथवा रामकबीरं श्रीरामानन्दिवैष्णवं वदन्ति च।

श्रीरामानन्दमतेऽस्मिन्सम्प्रदाये श्रीरामानुजाचार्यस्य सिद्धान्तोपासना प्रणाल्याचारविचारेभ्यो निःसन्देहः पार्थक्यं वर्तते। श्रीरामानुजसम्प्रदाये समधिकरूपे श्रीलक्ष्मीनारायण स्य युगतोपासना प्रचलिता, परंतु रामानन्दि सम्प्रदाये श्री सीतारामस्य युगलोपासनामुख्याभावे प्रवर्तिता।

**श्रीरामानन्दोत्तरसाम्प्रदायिकसाहित्यम् :—**

संस्कृतभाषापेक्षया हिन्दीभाषाया अधिकतरं रामानन्दिसम्प्रदायस्य साहित्यं दृष्टं भवति। श्रीरामानन्दस्य शिष्याणां पीपा रैदास • सेनप्रमुख भक्तगणानां लिखितम्तोत्रदोहादिकं तथा परवर्तिकाले तत्सम्प्रदायस्य प्रसिद्धकविना श्रीमत्तुलसीदासेन[१] (वि० सं० १५८९-१६८०) शततमे लिखितं दोहावलीगीतावली, श्रीरामचरितमानसं, विनयपत्रिका प्रभृति हिन्दी ग्रन्थानां नाभाजीद्वारा वि० सं० १६५७ शततमे लिखितहिन्दीभक्तमालः, मलुकदासेन ( वि० सं० १६३१-१८३९ ) शततमे लिखिता कवितावली, प्रियदासेन ( वि० सं० १७६९ ) शततमे लिखितस्य हिन्दीभक्तमालस्योपरि भक्तिरसबोधिनीटीकाप्रभृतिएतत्साम्प्रदायिक ग्रन्थाः प्रचारिताः सन्ति।

———

१—श्रीमत्तुलसीदासः श्रीरामानन्दात्परः सप्तमाधस्तनः। श्रीरामानन्दस्य शिष्यः १—श्री सुरसुरानन्दः, २—श्रीमाधवानन्दः, ३- श्रीगरीबानन्दः, ४—श्रीलक्ष्मीदासः, ५—श्रीगोस्वामिदासः, ६—श्री नरहरिदासः, ७—श्रीमत्तुलसीदासः।

मतान्तरेऽस्य वि० सं० १५५४ खी० १४९१ शतशमे प्रयागसमीपवर्तिबाँदाजनपदस्य राजापुर (?) ग्रामे समजनिष्ट। तत काशीं गत्वा विद्याध्ययनात्परं विवाहमकरोत्। एकदापत्न्याःभर्त्सनया संसारं त्यक्त्वा तीर्थभ्रमणानन्तरमथोध्यामागत्य वि० सं० १६३१ शततमे वर्षे श्रीरामचरितमानसस्य रचनां प्रारभत। श्रीमत्तुलसीदास्य वि० सं० १६८० शततमे वर्षे काश्यां तिरोभावो बभूव।

८—श्रीमद्बल्लभाचार्यः—

यजुर्वेदीयत्तैत्तिरोयशाखीयो भरद्वाजगोत्रीयः श्रीमल्लक्ष्मणभट्टः आन्ध्र-ब्राह्मणकुलोद्भव आसीत् । तस्य धर्मपत्नी यल्लमागरुनाम्नी प्रसिद्धा। तस्य गृहे वि० सं० १५३० (खृी० १४७३)[1] शततमे वर्षे वैशाख कृष्णैकादश्यां मध्यप्रदेशस्य रायपुरनिकटवर्तिचम्पारण्ये श्रीमद्वल्लभभट्ट-स्याविर्भावो बभूव। श्रीमल्लक्ष्मणभट्टेन पूर्ववासस्थानं परित्यज्य श्रीकाशी-धाम्नि हनुमद्घट्टमागत्य पुनर्वासं चकार। मुगलवंशीयैः काश्याक्रमण जन-रवं श्रुत्वा सप्तमासगर्भवत्या पत्न्यासह स्वदेशाभिमुखे गमनकाले पथि चम्पारण्ये श्रीमद्वल्लभस्य प्रादुर्भावो बभूव। शैशवावस्थायां तेन काश्यां विद्याध्ययनं कृत्वा श्रीमाधवानन्दयतेः समीपे वैष्णवशास्त्रस्याध्ययनं कृतम्। दक्षिणस्थविभिन्नतीर्थेषु परिभ्रमणं कुर्वन् स विजयनगर्यां मातुलगृहे समुपस्थितः। तत्र च राजसदसि सुप्रसिद्धतत्त्ववादाचार्येण व्यासतीर्थेन सह श्रीमद्वल्लभस्य साक्षात्कारोऽभवत्। तत्र तेन मायावाद-खण्डनं कृत्वा शुद्धाद्वैतवादस्य स्थापनकरणे राज्ञा कृष्णदेवेन श्रीव्यासतीर्थस्य सभा-पतित्वे श्रीमद्वल्लभभट्टाय कनकाभिषेकपूर्वकमाचार्यपदवी प्रदत्ता। श्रीवल्लभेन दिग्विजयार्थं समस्तभारतवर्षं वारत्रयं पर्यटनं कृत्वा द्वितीय-वारपर्यटनोपरान्ते त्रिंशद्वर्षवयसि सः काश्यामेवोद्वाहमकरोत्।

काशीसदृशतीर्थस्थाने गृहाश्रमी भूत्वा वासमङ्गतं मत्वा स प्रयाग-त्रिवेण्या अपरपारे आराईल (अरैल) ग्रामे निवासस्थानमकरोत्। ततो वल्लभो नानातीर्थेषु परिभ्रमन् श्रीव्रजमण्डले गोवर्द्धनमागत्य तत्र पूर्णमल्ल नामैकवणिजं शिष्यमकरोत्। तेन तत्सहायेन श्रीगोवर्द्धनपर्वतोपरि चैकं मन्दिरं परिनिर्मितम्। तत्रतः पुनः काशीमागत्य पञ्चगङ्गाघट्टे मायावाद संन्यासिनः शास्त्रयुद्धे पराजिताः। ततो वल्लभो गोकुले वासस्थानं संस्थाप्य श्रीगोवर्द्धनस्थनवमन्दिरे श्रीमाधवेन्द्रपुरीपादस्य पूर्वाविष्कृतं श्रीगोपालं (श्रीविग्रहं) पुनः संस्थाप्य श्रीमतः पुरीपादस्य गौडीयशिष्यगणान् श्रीगोवर्द्धन गोपालस्य सेवायां पूर्ववदधिष्ठितान् चकार। ततः सपत्नीकस्य तस्य आराईलग्रामगमनानन्तरं १४३२ शकाब्दे १५१० खृी० (वि० सं० १५६७) शततमे वर्षे प्रथमः पुत्रः श्रीगोपीनाथो जन्म लेभे। ततः स व्रज-मण्डलवाराणसीपुरी प्रभृति स्थानेषु परिभ्रमणं कृत्वा सकुटुम्बश्चरणाद्रिं जगाम। तत्र च तस्य द्वितीयपुत्रस्य श्रीविठ्ठलनाथस्य १४३७ शकाब्दे १५१५

---

१—मतान्तरे वि० सं० १५३६, खृी० १४७९।

खी० (वि० सं० १५७२) शततमे शुभाविर्भावो बभूव। श्रीबल्लभ अरैलं प्रत्यावृत्य श्रीमद्भागवतदशमस्कन्धस्य "सुबोधिनीटीकां" परिपूरयित्वैकादशस्कन्धस्य टीकां प्रारभत। तदानीं महाप्रभुः श्रीकृष्णचैतन्य देवः, अरैल ग्रामे तद् गृहे पदार्पणं कृत्वा सपुत्रं बल्लभमनुजग्राह तथा महाभागवतेन श्रीमता रघुपत्युपाध्यायेन सह भगवत्कथागोष्ठीं चकार[1]।

अतः परं पुनः श्रीबल्लभो जगन्नाथपुर्यां श्रीकृष्णचैतन्य देवस्य समीपं वव्राज। श्रीचैतन्य देवः "श्रीकृष्णनाम-तात्पर्यमेकमात्रं श्रीश्यामसुन्दरः श्रीयशोदानन्दनस्तथा श्रीकृष्णस्य सन्तोषार्थमुच्चैः स्वरेण श्रीकृष्णनाम ग्रहणमेव परम धर्मः, श्री श्रीधरस्वामिपादमनु लङ्घ्यैव श्रीमद् भागवतस्यानुशीलनं कर्तव्यम्" इत्यादि विषयकं कृपोपदेशं तस्मै ददौ। ततो वात्सल्यरसे श्रीकृष्णोपासकः श्रीबल्लभभट्टः श्रीगौरशक्तिगदाधरसमीपात् किशोरगोपालमन्त्रग्रहणानन्तरं मधुररसे[2] श्रीकृष्णभजने प्रवृत्तो बभूव[3]।

संस्कृतभाषायां लिखितो बल्लभदिग्विजयमतानुसारं श्रीबल्लभाचार्येण श्रीमाधवेन्द्रयतिसमीपे त्रिदण्डसंन्यासग्रहणं कृत्वा "पूर्णानन्द इति संन्यासनामाभिधेयं प्राप्तम्। काश्यां हनुमद्घट्टे संन्यासग्रहणदिवसाच्चत्वारिंशत्तमेदिवसे गङ्गायां नाभिदघ्नसलिलेऽवस्थानपूर्वकं श्रीभगवद्ध्यानं कुर्वन् १५३१ खी० (वि० सं० १५८८) शततमे वर्षे आषाढ़ शुक्ल द्वितीयायां श्री रथयात्रा तिथौ मध्याह्न कालेऽन्तर्हितो बभूव।

**श्रीबल्लभस्य गुरुपरम्परा[4]**

अस्य गुरुपरम्परा सम्बन्धेऽधोलिखितःक्रमः प्राप्यते।

---

१—(क) चै० च० मृ० १९।८४, (ख) आमेदावादवीर विजय मुद्रणालयात् लल्लुभाई छगनमल देशाई द्वारा वि० सं० १९९० शततमे मुद्रित श्री बल्लभाचार्यस्य "निजवार्ता" नामक पुस्तके, तथा कांकरोली विद्याविभागात्प्रकाशितसम्प्रदायप्रदीपस्य ८० पृष्ठेषु श्रीकृष्ण चैतन्य देवस्याडाईलग्रामे पदार्पणस्य कथा लिपिबद्धा वर्तते।

२—शृङ्गाररसे।

३—चै० च० मृ० अ० ६।१६७/वङ्गभाषाया (गौ०द० इ० वै० ३३९ पृष्ठम्)।

४—श्रीयदुनाम्न्यारोपित संस्कृत बल्लभदिग्विजयस्य प्रथमस्तथा द्वितीयावच्छेदः श्रीनाथद्वारेस्थितः वि० सं० १९७५।

श्री नारायणः, ततः श्री नारदः, श्री व्यासः आदि विष्णुस्वामी (त्रिदण्डि हंसः) तत्परं (१००)

शताचार्याः ततः श्री राजविष्णुस्वामी (द्वितीयः) अयमपि आन्ध्रदेशीयस्त्रिदण्डी) ।।

ततः श्रीविल्वमङ्गलः[१], श्रीदेवमङ्गलः, श्रीप्रभुविष्णुस्वामी (तृतीयः) श्रीगोविन्दाचार्यः, श्रीबल्लभदीक्षितः, श्रीयज्ञनारायण भट्टः, श्रीगदाधर सोमयाजी, श्रीगणपति भट्टः, श्रीबालभट्टः, श्रीलक्ष्मणभट्टः ततः श्रीबल्लभाचार्यः।

श्रीबल्लभाचार्येण वेदान्तार्थनिर्णयविषये श्रीव्यासदेवः स्वतस्तस्य गुरुरित्याख्यातम् । व्यासोऽस्माकं गुरुः[२] तथा तेन साक्षाद्भगवत्समीपाच्छ्रावणशुक्लैकादश्यां शिक्षालब्धेति प्रचारिता ।
यथा हि—

श्रावणस्यामले पक्षे एकादश्या महानिशि ।
साक्षाद्भगवता प्रोक्तं तदक्षरश उच्यते[३] ।।

**श्रीबल्लभाचार्यस्य सिद्धान्तः—**

ब्रह्म—वेदान्ते यद्ब्रह्म स्मृतौ स "परमात्मा" श्रीमद्भागवते स एव "भगवान्[1] ज्ञानमार्गीयसाधने—ब्रह्मस्फूर्तिः, मर्यादामार्गीयभक्तौ "परमात्मस्फूर्तिः" तथा शुद्धप्रेम्णि—"भगवत्स्फूर्तिः" मूलपुरुषभगवत श्चत्वारि स्वरूपाणि—प्रथमं भगवत् श्रीकृष्णपुरुषोत्तमस्वरूपं" द्वितीयं तथा तृतीयंस्वरूपमक्षर ब्रह्म" तन्मध्ये शुद्धाद्वैतज्ञानिगणानां ज्ञानमार्गे

---

१—श्री बल्लभाचार्यस्तत्कृततत्त्वार्थदीपनिबन्धस्य १/१०० श्लोकस्य प्रकाशाख्यव्याख्यायां श्रीविल्वमङ्गलं मायावादि सम्प्रदायस्येत्युल्लेखमकरोत् तथा विल्वमङ्गलमतात्स्वमतं पृथगिति निरदिशत् तत्त्वार्थदीपः—श्री हरिशङ्कर ओङ्कार शास्त्रिणा सम्पादितः १६५-१६६ पृष्टः । मुम्बई १९४२ खी० । सम्भाव्यते श्रीकृष्णकर्णामृतकार विल्वमंगलादयं पृथगिति । यतोहि श्रीकृष्णलीलारचयिता कथमपि मायावादि सम्प्रदायान्तर्गतो भवितुं नार्हति ।

२—तत्त्वदीपनिबन्धशास्त्रार्थप्रकरणम् ८ः श्लोकस्य प्रकाशटीका ।

३ —श्रीबल्भाचार्यकृतसिद्धान्तरत्नस्य १मः श्लोकः ।

निर्विशेषतुल्यस्फूर्तिः, भक्तगणानां—व्यापिवैकुण्ठस्फूर्तिः, तथा चतुर्थं स्वरूपंऽन्तर्यामीति ।[1]

जीवः—बहुभवनेच्छुसच्चिदानन्दपरब्रह्मणस्तिरोभूतानन्दांशरूप-चिदंशः[2] नित्यःसत्यश्च । परिमाणेऽणुः संख्यायां बहुस्तथानन्तः । उच्चनीच भावापन्नः कर्तृ भोक्तृ ज्ञात्रानन्दांशानां तिरोभावहेतोर्मायाया वशीभूतः । अग्न्यंशं विस्फुलिंगसमूहस्य दाहकत्वहेतुरग्निसंज्ञावत् जीवे प्रमातत्व ज्ञातृत्वादिभगवद्धर्मनिबन्धनजीवस्य ब्रह्मसंज्ञा" । भगवत्कृपाया जीवे तिरोभूतानन्दशंस्याविर्भावेसति व्यापकता धर्मलक्ष्यं भवति । अर्थात् काष्ठेऽनल-प्रवेशसदृश जीवब्रह्मात्मैक्यं भवति । जीवस्य प्रतिलोमकूपेऽनन्त ब्रह्माण्डं परिदृष्टं भवति, परन्त्वणुत्वस्वरूपं विनष्टं न भवतिः[3]

जगत्—भगवत्कार्यं भगवद्रूपं भगवतो मायाशक्त्या रचितम् । जगद्रूपकार्यस्योपादानं तथा निमित्तकारणं "ब्रह्म" । माया जगत्कारणं न ब्रह्म एव जगत्कारणरूपेऽविकृतपरिणामं प्राप्तम् । जगत्-ब्रह्मसदृशं नित्यं सत्यं च [4] सृष्टेः पूर्वं जगद्रूपकार्यं सर्वकारणे ब्रह्मणि विद्यमानं वर्तते, सृष्टेः परं स्पष्टरूपेण प्रतीयमानं भवति ।[5]

माया—परब्रह्मशक्तिः तस्या व्यामोहिका (जीवमोहनकारिणी) तथा आच्छादिका (सत्य प्रतिमाऽसत्यरचनया सत्याच्छादनकारिणी) भेदेन द्विविधावृत्तिः । स्वप्नसृष्टिरैन्द्रजालिकसृष्टिर्विवर्त्तसृष्टिरित्यादि माया हेतुका सृष्टिः, परन्तु जगत्सृष्टिर्ब्रह्महेतुकसृष्टिरिति ।[6]

**मर्यादामार्गः पुष्टिमार्गश्च :—**

तेनोक्तं-भक्तिपथः मर्यादापुष्टिभेदेन द्विविधः । शास्त्रीयानुशासनानुसारं या वैधीभक्तिः सैव मर्यादामार्गः । श्रीकृष्णस्य तस्य भक्तस्यचानु-

---

१—श्रीबल्लभाचार्यकृतसिद्धान्तरत्नस्य १मश्लोकः ।

२—तत्त्वार्थदीप - निबन्धः १।६

३ —श्री बालकृष्णभट्टकृतप्रमेयरत्नार्णवेमूलस्वरूपनिरूपणम् ११-१५ पृ०

४ —तत्त्वार्थदीपनिबन्धः १।२७-३० ।

५ —अणुभाष्यम् २।३।२०,४३,४५,४८,५० ।

६—तत्त्वार्थदीप नि० १।२३

७ —अणुभाष्यम् १।१।३

८ —तत्त्वार्थदीपनिबन्ध १।२३।२४ ।

ग्रहमात्रलाभैकहेतुका । या भक्तिः सैव पुष्टिमार्गः ।[1] श्रीरूपगोस्वामि प्रभुपादेव श्रीभक्तिरसामृतसिन्धौ श्रीवल्लभाचार्यकथितोक्त "मर्यादामार्ग"-स्यतथा पुष्टिमार्गस्य यथाक्रमे स्वसम्प्रदायस्य वैधी तथा "रागानुगा" भक्त्या सह तुलना कृता ।[2] श्रीमद्भागवतोक्त "पोषणं तदनुग्रहः"-इत्यादि वाक्यानुसारं श्रीकृष्णनुग्रहरूपाभक्तिरेव श्रीवल्लभप्रपञ्चिता पुष्टिभक्तिः । श्रीगौडीयरसिकगणानां सिद्धान्तसम्मतः श्रीमद्भागवतोक्तपुष्टिपराकाष्ठाया अधिकतरोत्कर्षः श्रीश्रीप्रीति सन्दर्भेप्रदर्शितः ।.... .... .. .. ... "पोषणेऽपि तदेवमुख्यं प्रयोजनम् । पोषणशब्देन ह्यनुग्रह उच्यते, तस्य च पराष्ठाप्राप्तिः स्वप्रीतिदान एव ।[3]

## श्रीवल्लभाचार्यमतस्य निम्नाङ्कितकतिपयवैष्टियानि

१—श्रीवल्लभेन वेदस्य पूर्वोत्तर काण्डौ चोभयौ संयुक्तभावै स्वीकृतौ । श्रीजैमिनिना वेदस्य केवलं पूर्वकाण्डंस्वीकृत्योत्तरकाण्डस्त्यक्तः । श्रीशंकराचार्येण पूर्वकाण्डं परित्योज्योत्तरकाण्डमेव गृहीतम् । तस्य मते वेदस्योभौ काण्डौ परस्परं सहयोगिनौ स्तः । यथ—श्रुतेः—"अपाणिपादो जवनो ग्रहीता इति मन्त्रपाठं कृत्वा यदि कश्चित्परब्रह्म हस्तपादरहितं मत्वा सिद्धान्तं कुर्यात्तर्हि स श्रीमद्भगवद्गीतायाः—"सर्वतः पाणिपादन्तत्"[4] इति वाक्येन विरोधः उपतिष्ठेत । पुनश्चयदिचेद्गीतायाः कस्मिंश्चिद् वाक्ये कोऽपि सन्देहः स्यात् तर्हि ब्रह्मसूत्रोक्तसिद्धान्तावलम्बनेन तस्य निवारणं संभवेत् । यदिचेदब्रह्मसूत्रस्य कस्मिंश्चिद् सिद्धान्ते संशयश्चेत्तर्हि श्रीमद्भागवतस्य समाधिभाषया तस्य परिष्कारः कर्तव्यः । एकमेव परंब्रह्म वेदस्य पूर्वकाण्डे यज्ञरूपेण चोत्तर काण्डे ब्रह्मरूपेण तथा स्मृतौ परमात्मरूपेण श्रीमद्भागवते च श्रीकृष्णरूपेण वर्णितमस्ति ।[5]

---

१—भक्तिरसामृतसिन्धुः १।२।२६६ ।

२—आ० २।१३।४ ।

३—श्री प्रीति सन्दर्भः १७ अनु० १८ पृ० ।

४—श्वेताश्वत्तरोप नि० ३।१६ ।

५—श्रीगीता १३।१३ ।

६—श्रीमद्वल्लभाचार्यविरचितः सप्रकाशतत्त्वार्थदीप-
निबन्धः शास्त्रार्थप्रकरणम् ६-१२ श्लोकः ।

२—चित्तप्रसन्नतया कर्मनिष्ठा, सर्वज्ञतया ज्ञाननिष्ठा, श्रीकृष्ण-प्रसन्नतया भक्तिनिष्ठा परोक्षिता च भवति[1]।

३ – जगत्तथा संसारः एको न। जगत् परिदृश्यमानप्रपञ्चः) ब्रह्मणः कार्यं तथा संसारः (जन्मग्रहण-प्रवाहः) जीवगताविद्यारचितः। संसारस्योपपत्तिलयौ भवतः परन्तु जगत आविर्भावतिरोभावमात्रं भवति। संसारस्य समाप्तिर्भवति। किन्तु जगतः समाप्तिः (शेषः) नास्ति। यदा श्रीकृष्ण आत्मरतीच्छुः भूत्वा जडजीवात्मकप्रपञ्चे तिरोहितश्चिदानन्दांशं प्रतिकटयतदा प्रपञ्चः श्रीकृष्णे लीनो भवति।[2]

४—परब्रह्मस्वरूपलक्षणे सच्चिदानन्दमयः, सर्वव्यापी सर्वशक्तिमान् स्वतन्त्रस्त्रिविधभेदरहितः, सर्वाधारो मायाधीशो जगतः समवायिनिमित्तकारणः विरुद्धधर्माश्रयः, युक्तेरगोचरः, आविर्भावतिरोभावशक्तिशाली स्वेच्छयाप्रकाशशीलः परमकाष्ठापन्नः पुरुषोत्तमशब्दवाच्यः नित्यलीलः श्रीकृष्णः[3]। ब्रह्मणः चिदंशादनन्तजीवस्तथाऽऽनन्दांशादन्तर्यामिस्वरूपः कथ्यते। अमेव ज्ञानिगणानामुपास्य स्तथा ज्ञानमार्गीयमुक्त जीवानामक्षरसायुज्यगतिरस्ति।[3]

५—ज्ञानमार्गस्य साध्योऽक्षरब्रह्मणिलयः, इममेव मायावादिगणा ब्रह्मानन्दं वदन्ति। भक्तेः साध्यः स्वरूपानन्दोऽथवा सायुज्यः। अस्मिन् जीवानां जीवत्वस्य लयो न भवति। जीवेषु यो गुप्तानन्दभावः स एव व्यक्तो भवति। अयमेव ब्रह्मभावोऽथवा सायुज्यमोक्षः कथ्यते। बल्लभाचार्यस्य मते भक्तिरेव–साधधनम् सायुज्यम् अथवा ब्रह्मभावः—साध्यः।[5]

६—"तत्त्वमसि"—मन्त्रो जीवात्मना सह परब्रह्मण ऐक्यमथवा बिम्बप्रतिबिम्बभावं बोधयति शङ्कराचार्य-तत् (ब्रह्म)+त्वं (जीवः)+असि। एवं मध्वाचार्य, –अतत्+त्वम्+असि। इत्थं तत्त्वमासि तथा अतत्त्वमसि पाठस्य निर्णयं तौ विदधाते।

---

१—श्री ब० चा० वि० सप्रकाश तत्त्वार्थ दीप० नि० १७ श्लोजः।

२—तत्रैव २३-२४ श्लोकौ।

३—सप्रकाशतत्त्वार्थ दीप नि० १।४४,६५।११,२।१,३।११७ सिद्धान्तमुक्तावली —३ श्लोकी। अणुभाष्यम् ३।२।२४।

४—सप्रकाशतत्त्वार्थ दीप नि० २।१२१।

५—तत्रैव (स० प्र० त० दी० नि०) १ २५,२६,२।६८–१३३, १२१, सुबोधिनी —१२।४।२१,२।७।४७

परन्तु श्रीमद्वल्लभाचार्येण तत्त्वम्+असि=तस्य भावस्तत्त्वं भवसि एवंविधोऽर्थः कृतः।[1] अमात्ये राजपद-प्रयोगवत् प्रज्ञा-द्रष्टृत्वादि ब्रह्म-गुणसारसम्पन्ने जीव जडवैलक्षण्यकारि "तत्त्वमसि"[2] वाक्य श्रुतेः खण्डितांशमात्रम्—महावाक्य न हि। परन्तु "ऐतदात्म्यमिदं+ ++ +तत्त्वमसि श्वेतकेतो" इदं सम्पूर्णवाक्यमेव "महावाक्यम्" तद्-द्वारा जगतो ब्रह्मात्मकत्वं, सत्यत्वं तथा जीवब्रह्मणोऽभिन्नत्व (न हि साम्यम्) इति ज्ञापित भवति। 'तत्त्वमसि' श्रुतिर्जीवब्रह्मणोगुण-साम्य ज्ञापिका, अर्थात् ब्रह्मणः सर्वप्रधानगुण एवाऽऽनन्दो भवति। जीवेषु तदानन्दमयता सुप्तरूपेण वर्तते। यदा तदानन्दो जीवेषु व्यक्तो भवति, तदैव तस्मिन् ब्रह्मसाम्यं प्रकाशितं भवति। जागतिकावस्थाने जीवे तदा-नन्द-गुणएव तिरोहितः, किन्तु जीव आनन्द हीनो न भवति। आनन्द-स्तस्मिन् अनुस्यूतो वर्तते। यथा—बालके पुंस्त्वं शैशवकालेऽनुस्यूतं तिष्ठति सति यौवने तद् व्यक्तं भवति।

७—यो वैदिक गौणमुख्ययोर्ज्ञानयुक्तः प्रेम्णा सह श्रवणादिभक्तिभिः श्रीहरेः सेवां करोति, स भक्तिमार्गे उत्तमः। ज्ञानेन सह यस्य भक्तिरस्ति परन्तु प्रेम न हि स मध्यमः। यस्य शास्त्रार्थस्य ज्ञानभावोऽथ च प्रेम्णा सह भजनं करोति स अवमः। यस्य प्रेमज्ञाने न स्तः, किन्तु सेवां करोति तस्य तद्भक्तिः (पापघ्नीस्तथा, तस्यां धर्मजनकत्वसत्वेऽपि सा वास्तव-भक्तिर्नहि)। श्रीमद्वल्लभाचार्यमतेवैराग्यंज्ञानंयोगस्तपस्या प्रेम चोत्तम भक्तेरङ्गानि[2] भवन्ति।

८—प्रथमं वैराग्यम् (विषय-वितृष्णा) ततः सांख्य ज्ञानं (नित्यानित्य वस्तुविवेकपूर्वकं सर्वपरित्यागः) तदनन्तरमेकान्ताष्टाङ्गयोगः तदनन्तरं तपः (विचारपूर्वकमालोचनाऽथवैकाग्रभावे स्थितिश्च) अनन्तरं भक्ति-रर्थान्निरन्तरं भावना द्वारा परमं प्रेम। विद्वद्व्यक्तिरितिपञ्चपर्वविद्यया श्रीहरेः साक्षात्कारः तस्मिंश्च प्रवेशलाभं करोति। इयं मर्यादामार्गीय साधन सम्पत्तिस्तथाऽस्य साधनस्य मोक्ष एव साध्यः। यो मुक्तो भवति स स्थूलसूक्ष्मदेहं परित्यज्य ब्रह्मणि लयमथवा ब्रह्मभावं (जीवस्वरूपे तिरोहितआनन्दांशस्याविर्भावः) प्राप्नोति। एकमात्रं श्रीहरिसेवया तद् सायुज्यमथवा ब्रह्मभावं लभते। मुक्तजीव एकमात्रमात्मनि चानन्दानुभवं करोति। परन्तु स्वतन्त्रभक्तोऽर्थात् पुष्टिमार्गीय भक्तगणस्य विशेषत्वमिदं

---

१—सप्रकाश-तत्त्वार्थ दीप निबन्धः ६१ श्लोकः।
२—अणुभाष्यम् २।३।२६।
३—सप्रकाशतत्त्वार्थदीप निबन्धे शास्त्रार्थप्रकरणम् १०१-१०३ श्लोकः।

यतः पर्येन्द्रियेऽन्तःकरणे तथा स्वरूपे चानन्दानुभवं कुर्वन्ति । अत एतादृक्-भक्तगणपक्षे जीवन्मुक्तरपेक्षया भगवत्कृपया सह गृहाश्रमएव श्रेष्ठः[1] ।

९—यदि चेत्तपोवैराग्याभ्यां सह श्रवणादिभक्तिरनुष्ठिता भवति तर्हि तस्य फलस्वरूपं जन्मातरे ज्ञानलाभो भवति, यदि तपोवैराग्ययोग-युक्तैः श्रवणादिभक्तिरनुष्ठिता भवति तर्हि प्रेमफलं लभते। तथाचोक्त पश्चाङ्गगतीत केवल श्रवणाकीर्तनार्यपत्परमपुरुषार्थसाधकत्वनिरूपितम भूत् । तद्द्वारा भगवतो माहात्म्यमेव निरूपितं भवति[2] ।

१०—सर्वप्रकारेण (सर्वथा) श्रीकृष्णस्य गुणालापः, तस्य नामोच्चारणम्, आदरेण सह श्रीमद्भागवतपाठप्रभृति श्रेष्ठसाधनम् । शङ्खचक्रादिचिह्नधारणम्, तिलकद्वारा चोर्ध्वपुण्ड्रधारणम्, कण्ठे श्रीतुलसी काष्ठ-मालाधारणम्, अविद्धैकादशी व्रतम्, श्रीकृष्णजन्माष्टमी प्रभृति व्रतोद्यापनमित्यादि गृहस्थगणानां पक्षेऽपि विशेषेण कर्तव्यम् । समस्तवर्णि गणानां पक्षे एव तीर्थपर्यटन श्रेष्ठम् । (१) मानसिकाशान्तिः, (२) श्रीहरेरर्चनेऽयोग्यता, (३) विघ्नोऽथवा प्रतिकूलावस्थायाः सम्भावना, (४) सांसारिक कर्तव्यस्य बाहुल्यम् (५) अन्य द्वारा निर्यातितभवनस्याशङ्का चेति पञ्चावस्थायां तीर्थपर्यटनस्योपकारिता वर्तते । उपर्युक्त सकल व्यापारे साधकः स्थिरचितेन श्रीहरि सेवां कर्तुमक्षमः सुतरां तीर्थटनेन चित्तशुद्धिस्तथा श्रीहरि सेवायाः सुयोगो भवितुमर्हति ।[3]

सर्वात्मना गृहमर्थं च परित्यज्यैकात्मभावेन[4] श्रीहरिभजन श्रेयः । यदिचेतस सम्पूर्णभावेऽसमर्थो भवेत्तर्हि त श्रीकृष्णसेवायां नियोजयेत् ।

---

१—सप्रकाश तत्त्वार्थदीप--निबन्धे शास्त्रार्थप्रकरणम्—४५,४६,५०,५१, सर्व निर्णय प्रकरणम्—२२८-२४६ श्लोकाः ।

२—तत्रैव स० त० दी० नि० शा० प्र० १०२ श्लोकाः ।

तपौ वैराग्ययोगे तु ज्ञानं तस्य फलिष्यति ।
योगेयोगे तथा प्रेम स्तुतिमात्रं ततोऽन्यथा ।।

३—सप्रकाश त० दी० नि० सर्व निर्णय प्रकरणम्—२४६-२४७ श्लोकौ ।

४—"अथवा सर्वदाशास्त्रं श्रीमद्भागवतमादरात् ।
पठनीयं प्रयत्नेव सर्वहेतुविवर्जितम् ।।
वृत्त्यर्थं नैव युञ्जीत प्राणैः काण्ठगतैरपि ।
तदभावे यथैव स्यात्तशा निर्वाहमाचरेत् ।।
त्रयाणां येन केनापि भजन् कृष्णमवाप्नुयात्"
—तत्रैव २६३, २६४ श्लोकौ ।

अहैतुकभावे सर्वं प्रयत्नेन च सर्वदादरेण सह श्रीमद्भागवतशास्त्रानुशीलनं कर्त्तयाम्। परन्तु प्राणेकण्ठमागतेऽपि वृत्तेर्निमत्ताय श्रीमद्भागवतपाठो न विधेयः। केन प्रकारेणापि श्रीमद्भागवतस्य जीविकार्थं पठनपाठने न कर्तव्ये। अस्य ब्रह्मसूत्रभाष्यनाम "अणुभाष्यम्"।

**श्रीमद्बल्लभाचार्यस्य ग्रन्थावली**

श्रीमद्बल्लभाचार्येण संस्कृतभाषयां चतुरशीति (८४)[1] ग्रन्थाः रचिताः इति प्रसिद्धिरस्ति, परन्तु साम्प्रतं तेषु निम्नाङ्किताः कतिपय एव ग्रन्थाः समुलभ्यन्ते। १—ब्रह्मसूत्राऽणुभाष्यम्, २—जैमिनिसूत्रभाष्यम, ३—सुबोधिनी (श्रीमद्भागवतटीका,—साम्प्रतं प्रथमत्रयाणां स्कन्धानां सम्पूर्णटीका, चतुर्थस्कन्धस्य षष्टाऽध्याय पर्यन्तं टीका दशमस्कन्धस्य सम्पूर्ण टीका, तथैकादशस्कन्धस्य चतुरध्यायानां टीका–एतावन्मात्रमुपलभ्यते) ४—श्रीमद्भागवतस्यसूक्ष्म टीका, ५—तत्त्वार्थदीपनिबन्धः (शास्त्रार्थसर्वनिर्णयस्तथाभागवतनामकस्त्रिषु प्रकरणेषु विभक्तः) ६—स्वकृततत्त्वार्थदीपनिबन्धस्य प्रकाशनाम्नी व्याख्या। श्रीयमुनाष्टकम्, बालबोधसिद्धान्त मुक्तावली, पुष्टिप्रवाहमर्यादाभेदः, विवेकधैर्याश्रयः, सिद्धान्तरहस्यम्, नवरत्नम्, अन्तःकरणप्रबोधः, श्रीकृष्णाश्रयः, चतुःश्लोकी, भक्तिवर्द्धिनी, पञ्चपद्यम्, संन्यासनिर्णयः, निरोधलक्षणम्, सेवाफलम्, जलभेदः, पत्रावलम्बनम् श्रुतिगीता, शिक्षाश्लोकाः, श्रीमथुरामाहात्म्यम्, श्रीमधुराष्टकम्, श्रीकृष्णजन्मपत्रिका, पुरुषोत्तमनामसहस्रम्, सेवाफलविवरणम्, परिवृढाष्टकम्, श्रीनन्दकुमाराष्टकम्, श्रीगिरिराजधार्याष्टकम्, श्रीकृष्णाष्टकम्, श्रीगोपीजन बल्लभाष्टकम्, पञ्चश्लोकी गायत्रीभाष्यम् त्रिविधलीलानामावली, श्रीभगवत्पीठिका, इत्यादि।

श्रीमवल्लभाचार्य—कृत ब्रह्सूत्राणुभाष्यम्, जैमिनीसूत्रभाष्यम्, सुबोधिनी (श्रीमद्भागवत टीका) साम्प्रतमसम्पूर्णरूपेण प्राप्यते। केनचिन्मन्यते श्री बल्लभाचार्येणाणुभाष्यग्रन्थः सम्पूर्णरूपेण रचितः परन्तु तस्य द्वितीयपुत्रेण पण्डितश्रीविट्ठलनाथेन तस्य (तृतीयाऽध्यायस्य द्वितीयपादस्य त्रयस्त्रिंशत्सूत्रपर्यन्तं संगृहीतम् अवशिष्टांशस्य भाष्यं रचयित्वा, अणुभाष्यग्रन्थः" परिपूरितः।

श्रीमूलचन्द्रतुलसीदासप्रमुखानां मते श्रीबल्लभाचार्येण सर्वप्रथमं वृहद्भाष्यनामकं श्रीब्रह्मसूत्रस्यैकं विस्तृतं भाष्यं विरचितं परन्तु,

[1]—८४ संख्या बल्लभ सम्प्रदायस्यैका विशिष्टभावज्ञापिका संख्या, सुतरां ८४ संख्यक इति कथनेन बहु्वर्थाभिधायिनी ज्ञेया।

आचार्यस्य ज्येष्ठपुत्रस्य श्रीगोपीनाथस्य विधवापत्नी श्रीवल्लभकृतग्रन्थ राशिं संगोपयामास। अतः श्रीविट्ठलनाथस्तेषां ग्रन्थानां संग्रहकरणेऽसमर्थेऽभवत् अतस्तद्ग्रन्थसमूहो लुप्तप्रायोजातः।

**६—श्रीविज्ञानभिक्षुः**

श्रीविज्ञाभिक्षुः खृष्टीयषोडशताब्द्यां विद्यमान आसीदिति ज्ञायते। ब्रह्मसूत्रभाष्य[1] वेदान्तशास्त्रस्याधिकारिनिर्णयप्रसङ्गे तेनेदमुच्यते, बहूदक विष्णुधर्मसंहितायाः प्रमाणानुसारं गृहस्थाश्रमात् त्रिदण्डिपर्यन्ते निकृष्टाधिकारी, तथा परमहंसः उत्तमाधिकारीति। कुटीचको बहूदको हंसस्तथा परमहंस इति भेदेन भिक्षवश्चतुर्विधाः भवन्ति। ते तेषामुत्तरोत्तरं श्रेष्ठा इति। तन्मध्येषु कुटीचकस्तथा बहूदकः विविदिषुः सन्यासी। एव हंसः (जीवात्मनिष्ठः) परमहंसस्तु (परमात्मनिष्ठः) विद्वत्संन्यासी। संवर्तकः, आरुणिः, श्वेतकेतुः, दुर्वासाः, ऋभुः जडभरतस्तथा दत्तात्रेयः इमे प्रमुखा मुनिगणाः परमहंसपदवाच्याः। एतेन ज्ञायते यत् श्रीविज्ञानभिक्षुः उक्तविधः कश्चिद् भिक्षु स्वाभिमानी संन्यासी आसीत्।

अयं योसूत्रवृत्तिकारभावागणेशदीक्षितस्य गुरुरिति कथ्यते। अनेन विज्ञानभिक्षुणा स्वकृतसांख्यप्रवचनभाष्ये सांख्यसूत्र वृत्तिकारानिरुद्धस्य मतमुद्धृतम्। महादेवस्य सांख्यसूत्रवृत्त्यां विज्ञानभिक्षोर्मतमुद्धृतमस्ति।

**विज्ञानभिक्षुकृतग्रन्थावली**

अनेन ब्रह्मसूत्रस्य विज्ञानामृत-भाष्यातिरिक्तं कठ, तैत्तिरीय,, प्रश्न मुण्डक, माण्डूक्य, कैवल्य, मैत्रेय, श्वेताश्वतरप्रभृति कतिपयोपनिषदां "आलोक" नामकं भाष्यं, तथोपदेशरत्नमाला, श्रीगीताभाष्य, सांख्यप्रवचनभाष्यं, सांख्यसारविवेकः (सांख्यप्रकरणग्रन्थो गद्यपद्यमयो रचितः) ब्रह्मादर्शो योगवार्त्तिकः (पातञ्जल योगदर्शनस्य व्यासभाष्यटीका) इत्यादयो ग्रन्थाः रचिताः।

**श्रीविज्ञानभिक्षोर्मतम्।**

श्रीविज्ञानभिक्षोर्मतवाद एकप्रकारेण भेदाभेदवाद इति कथ्यते। अविभागोऽथवाऽभेद एव, आद्यन्ते च विद्यमान स्वाभाविकं तथा नित्यं कथने सत्यम्, तथा विभागोऽथवा भेदो मध्यवर्तिकाले परिच्छिन्न रूपेण

---

१—विज्ञानामृत भाष्यम् १।१।१ (२८,२९ पृ०:) काशी चौखम्बा संस्कृत ग्रन्थ माला सम्पादिता।

वर्तमानःकथने नैमित्तिकः[१] । अस्य वेदान्तसूत्रभाष्यनाम—विज्ञानामृत-भाष्यमिति ।[२]

ब्रह्म—चिदचिच्छक्तियुक्तं चिन्मात्ररूपं परमेश्वरस्याऽन्तर्लीनं प्रकृतिपुरुषाद्यखिलशक्तिविशिष्टं विशुद्धसत्त्वाख्यं मायोपाधिविशिष्टं क्लेशकर्मविपाकाशयद्वाराऽनभिभूतचेतनविशेषम् । ब्रह्म—जगत्कर्ता, जगतोऽधिष्ठानकारणमर्थात्सृष्टेः पूर्वं ब्रह्मणि जीवजगती विभक्तरूपेण विद्यमान आस्ताम्। अपि च तदाधारेणैव प्रकृतिपुरुषरूपोपादानकारणं कार्यकाले परिणतं भवति[३] । ब्रह्म—अविकारं चिन्मात्ररूपेण विद्यमानमपि जगतोऽभिन्नंनिमित्तोपादानकारणरूपेणोपलभ्यते । ब्रह्मणः सर्वशक्तिविशिष्टत्वात्तद्गतोपगाधिद्वारा जगतः सर्वप्रकारकारणत्व ब्रह्मणि सम्भाव्यते । इत्यादिकया सृष्टिप्रक्रिययाऽविरुद्धभावेन वैशेषिकसांख्यशास्त्रयोश्च सम्मतम् । अन्योन्याभावलक्षणभेदेन जीवादत्यन्तभिन्नेश्वर एव ब्रह्म-शब्दवाच्यः[३] ।

जीवः—सूर्यस्तस्य किरणसदृशब्रह्मणोंऽशविशेषः । जीवेश्वरयोरंशांशिभावेन विभागाविभागरूपेण भेदाभेद इति श्रुतिसिद्धः । तथाप्येको विशेषोयद्—अविभाग एव (अभेद एव) आद्यन्ते चाऽनुगमनं करोति । एवंविधं स्वाभाविकं नित्यत्वात्सत्यम् । तथा विभागः (भेदः) माध्यमिकावस्थायाः स्वल्पकालमात्रस्थायित्वान्नैमित्तिकम्[४] ।

जगत्—नामरूपाभ्यां सह चेतनाऽचेतनरूपमचिन्त्यरचनात्मकं जन्मादिषड्विकारात्मकं प्रकाशितम् । जगदव्यक्तरूपेण नित्यम्, व्यक्तरूपेणानित्यं परन्तु सत्यम् । ब्रह्मणः साक्षात्परिणामो विवर्तो नास्तीति[५] ।

विज्ञानभिक्षुणोक्तम्—वेदान्तशास्त्रे (द्वितीयाऽध्यायस्य तृतीयपादे) सांख्ययोगशास्त्रयोः सदृशी महदादिक्रमणैव सृष्टिप्रक्रिया प्रदर्शिता। तत्रैव विशेषतायत् प्रकृति-स्वातन्त्र्यवादिसांख्ययोगिगणाश्च कथयन्ति—पुरुषार्थप्रयुक्ता प्रकृतिः स्वयमेव चुम्बकलौहसदृशं पुरुषेण सह (अर्थात्

---

१—विज्ञानामृतभाष्यम् १-१-२, ६१ पृ० ।
२—,, ,, ,, ,, १।१।२ (३२ पृ०) काशी चोखम्पा-सं० ।
३—तत्रैव ६१ पृ० ।
४—तत्रैव ६१ पृ० । गौ०द०इ० वै० बङ्गभाषा १९५२ खी० (२०१० सं०) प्रमाणानसारम् ।
५—विज्ञानमृतभाष्यम्—१।१।२ (३१, ३३ पृ०)

आद्यजीवेन सह) संयुक्ता भवति। तथा च वयं प्रकृतिपुरुषयोः संयोगे ईश्वरकर्तृक साधिता भवाम इति स्वीकुर्मः[1]।

**श्रीशङ्करो विज्ञानभिक्षुश्च।**

१—श्रीशङ्कराचार्यकथितसाधन-सम्पत्तिचतुष्टयप्राप्त्यनन्तरं ब्रह्म जिज्ञासाया अधिकारो भवति। इति विज्ञानभिक्षुणाऽस्वीकृतम्। अयं ब्रह्म-सूत्रस्य 'अथ' शब्दोच्चारण मात्रमेव मङ्गलवाचकं तथा प्रकरजनिरूपण वाचकम् "अतः" शब्दो ब्रह्मविचारस्यानुषङ्गिकरूपेणैव जीवजगतो-र्निरूपणवाचक इत्यबोचत्।

२—अयं श्रीशङ्कराचार्यकथितप्रादेशिकवाक्यं महावाक्यरूपेऽ-स्वीकृत्य आदित जन्तपर्यन्तं समग्रब्रह्मसूत्रमेव महावाक्यमित्यवदत्[2] एतन्मते ब्रह्मसूत्रस्य सूत्रसमूहनिर्णयग्रन्थोऽथवा सिद्धान्तस्वरूप इत्युभयोः कोऽपि शिष्याणां पूर्वपक्षस्वरूपो नास्तीत्यकथयत्[3]।

३—विज्ञानभिक्षोर्मतानुसारमीश्वरः सशक्तिकोऽपि निर्गुणः। परन्तु श्रीशङ्कराचार्यमतानुसारं सशक्तिकसत्त्वे ब्रह्मणः पुनर्निर्गुणता स्थितिर्न भवति-ब्रह्म सगुणं मायिकं च भवेदिति। अर्थात्तस्य ब्रह्मणः सगुणमायि-कयोः स्थितिरापतेत्।

४—श्रीशङ्करस्य मतवादं सुतीव्रभावेन निनिन्द्यौपचारिकभेदाभेद वादि भास्करो यथा चरमे श्रीशङ्करस्यादर्शे विलीनो बभूव[4], तथैवाऽयं विज्ञानभिशुश्च श्रीशङ्करस्यमतवादं यथेष्टं निनिन्द्य चरमे श्रीशङ्करा-दर्शस्यैव ग्राहणं कृतम्। श्रीविज्ञानभिक्षुश्चिन्मात्रस्वरूपं ब्रह्म चरमतत्त्वरूपे निर्धार्य ओंनारायणादिभगवदवतारगणान् "लौकिक ब्रह्म" अथवोपा-धिमात्र रूपे वर्णनं कृत्वा, ईश्वरतत्त्वे भेदकल्पनां चकार[5]।

---

१—तत्रैव १।१।२ (३४ पृ०)

२—तत्रैव १।१।१।

३—ब्र० सू० १।१।१—विज्ञानमृत भाष्यम्—४, २७ पृ०।

४—विज्ञानभिक्षुकृतसांख्यप्रवचनभाष्यस्य प्रारम्भे (मङ्गलाचरणा-नन्तरम्) श्रीपद्मपुराणस्य श्लोकमुद्धृत्य मायाबादमतं बौद्धमतमिति कथयित्वा यथेच्छं निनिन्द। विज्ञानभिक्षुकृतसांख्यप्रवचनभाष्यं (पण्डित ढुण्ढिराज शास्त्रिसम्पादितम् ४,५ पृ० काशी चौखम्बा विद्या-विलास प्रेस १६२८ खी०)

५—विज्ञानामृत भाष्यम् १।१।५, १३५ पृ०।

श्रीविज्ञानभिक्षुणौपचारिकभेदाभेदवादिभास्करमतस्य तथा श्रीनिम्बार्काचार्यमतस्य किञ्चित्किञ्चिदनुकरणानुसरणंकृतम् । अनेव ब्रह्मसूत्रे एव श्रीशङ्कराचार्यस्य मतवादः खण्डितः। अतः केचन श्रीविज्ञान भिक्षुं समन्वयवादि नम् अथवा चयनवादिनम् मन्यन्ते । केवलाद्वैतवादि गणास्तं द्वैतवादि तथा वैष्णवमतावलम्बिनं वदन्ति । अपिच केचन प्रच्छन्नसांख्यवादीति कथयन्ति ।

श्रीविज्ञानभिक्षोर्मतानुसारं कर्मविशिष्टज्ञानमेव मोक्षस्य साधनम् तथा च सागरे यथा नदनदीसमूहो विलीयते तथैव जीवस्य ब्रह्मणि अनन्यत्वरूपेण आत्यन्तिकलय एव मुक्तिरिति[१] ।

## १०–श्रीबलदेवविद्याभूषणः

"श्रीपाद बलदेवविद्याभूषणः" उत्कलदेशान्तर्गतबालेश्वर जनपदस्य रेमुणा सन्निकटे कस्मिंश्चिद् ग्रामे प्रायः वि० सं० सप्तदश (१७००) शततमे वर्षे प्रादुर्बभूव। अयं महाभागो निष्किञ्चनपरमवैष्णव भागवत सीत्। तस्मिन् प्रतिष्ठाकांक्षाया विन्दुमात्रमपि नासीत्। अतस्तेन कस्मिंश्चित्पुस्तके स्वस्य परिचयो नोल्लिखितः। तेन च श्रीरूपगोस्वामिकृतस्तव मालाया "उत्कलिकावल्लरी" नामकस्तवस्यस्तवमाला विभूषणटीकोप[1] संहारे मात्रं षडशीत्युत्तरषोडशशती (१६८६) शततमे शाके तदनुसारं (वि० सं० १८२१ शततमे वर्षे) टीकाया निष्पत्तिरित्युल्लिखिता। ऐतिह्यप्रमाणानुसारं सः पलाशीयुद्धस्य (खी० १७५७) (वि० सं० १८१४) अनन्तरमपि प्रकटआसीत्।

**तदध्ययनस्थानम्**—श्रीबलदेवो गञ्जाम जनपदान्तर्गत चिल्काह्रदस्यापरपारे कस्मिंश्चिद् विद्वद्वास्तव्ये व्याकरणालंकार-न्यायाशास्त्राणामध्ययनं विधाय वेदाध्ययनात्परं महीशूरं गत्वा वेदान्ताध्ययनमकरोत्। तदानीं स तत्त्ववादिनः (माध्वसम्प्रदायस्य) शिष्यत्वमुरीकृत्य तत्सम्प्रदायान्तर्भुक्तोबभूव। श्रीबलदेवः संन्यासग्रहणं कृत्वा श्रीपुरुषोत्तम क्षेत्रस्थतदानीन्तनान् पण्डितगणान् शास्त्रार्थे पराजित्य तत्त्ववादि मठेऽवस्थानं चकार। किञ्चित्कालानन्तरं श्रीरसिकानन्द मुरारेः प्रशिष्यस्य कान्यकुब्ज

---

१—ब्रह्मसूत्रम् ४।४।४–विज्ञानभिक्षुभाष्यम्। (गौ० द० ई० वै० बङ्गभाषा ११५३ खी० २६७ पृ०)

१—श्रीस्तवमाला श्रीबलदेवविद्याभूषणविरचितभाष्येण सह मुम्बई निर्णय सागर यन्त्र खी० १९०३ (वि० सं० १९६० द्रष्टव्यम्)

पण्डितस्य श्रीराधादामोदरस्य सान्निध्ये श्रीषट्[1] सन्दर्भाऽध्ययनं कृत्वा स: श्रीगौडीयवैष्णवधर्मं प्रतिविशेषाकृष्टो भूत्वा श्रीराधादामोदरस्य शिष्यत्मुरीचकार । श्रीमद् बलदेवेन विरक्तश्रीपीताम्बरदाससान्निध्ये भक्तिशास्त्रस्य तथा श्रीमद्वृन्दावने श्रीलविश्वनाथचक्रवर्तिपादसान्निध्ये श्रीमद्भागवतस्याध्यनं कृतम् । तत्परं स गृहीत्वा विरक्तवैष्णव वेश-वैक्रान्तिकगोविन्ददासनाम्ना प्रसिद्धोऽभवत् ।

**तद्गुरुपरम्परा**

१—श्रीमन्नित्यानन्द प्रभ: ।
२—तच्छिष्य: श्रीहृदय चैतन्य: ।
३— ,, श्रीश्यामानन्द: ।
४— ,, श्रीरसिकानन्द: ।
५— ,, श्रीनयनानन्द: ।
६— ,, श्रीराधादामोदर: ।
७— ,, श्रीमद् बलदेवविद्याभूषण: ।

**तद्रचितग्रन्थावली**

श्रीमद्बलदेवविद्याभूषणेनाऽधोलिखितग्रंथा विरचिता: । १—श्री गोविन्दभाष्यम् (ब्रह्मसूत्र भाष्यम्) २—सिद्धान्तरत्नम् (भाष्य पीठकम् ३—वेदान्तस्यमन्तक: । ४—प्रमेयरत्नावली । ५—सिद्धान्तदर्पणम् ६—साहित्यकौमुदी । ७—काव्यकौस्तुभ: । ८—व्याकरणकौमुदी) ९—पदकौस्तुभ: । १०—वैष्णवानन्दिनी (श्रीमद् भागवत टीका) ११—गोपालतापनी भाष्यम् । १२—ईशादिदशोपनिषद् भाष्यम् । १३—श्रीगीता भूषणभाष्यम् । १४—श्रीविष्णुसहस्रनाम भाष्यम् । (नामार्थ सुधा) १५—संक्षेप श्रीभागवतामृत टिप्पनी—"सारङ्गरङ्गदा" । १६—तत्त्वसंदर्भ टीका । १७—स्तवमाला विभूषणभाष्यम् । (श्रीरूपगोस्वामिपादविरचित स्तवमालोपरि) १८—नाटक चन्द्रिका टीका (दुष्प्राप्या) १९—छन्द: कौस्तुभ भाष्यम् । २०—श्रीश्यामानन्दशतकटीका । २१—चन्द्रालोक टीका (दुष्प्राप्या) । २२—साहित्य कौमुदी टीका (कृष्णानन्दिनी) २३—श्रीगोविन्द भाष्य टीका—"सूक्ष्मा" । २४—सिद्धान्तरत्नटीका—"सूक्ष्मा" ।

---

१—श्रीमज्जीवगोस्वामिकृत तत्त्व, परमात्म, भगवत् श्रीकृष्ण, श्रीभक्ति, श्रीप्रीत्यादि षट् सन्दर्भा: "श्रीमद् भागवतोपरिदार्शनिकविशेष-व्याख्या" ।

**श्रीगोविन्दभाष्यरचनारहस्यम्**

यदा श्रीमद् राधादामोदर देव गोस्वामिना स्वच्छिष्याय श्रीमद् बलदेवाय कलियुग पावनावतारिणः श्रीमद्गौराङ्गमहाप्रभोः कृपावदानस्यौदार्यंचरित्रमुपदिश्यते स्म तथा गौडीय वैष्णव सिद्धान्त सार्वभौमत्वस्य कथापि चोपवर्णिता तदा तत्कथायाः सूक्ष्मतत्त्वं श्रीमद् बलदेव विद्याभूषणस्य हृदय स्पृशत् । श्रीगुरुचरणाश्रये कियत्कालं श्रीमच्चैतन्यस्य भुवनपावनकथाश्रवणानन्तरं स तस्माद् श्रीराधाकृष्णयुगलमन्त्रं गृहीत्वा तत्सान्निध्ये श्रीमज्जीवगोस्वामिपादस्य षट्सन्दर्भाध्ययनं कर्तुमारेभे । श्रीमद्बलदेवविद्याभूषणोऽल्पकाले श्रीगौडीयवैष्णवसिद्धान्ते पारङ्गतो बभूव । कतिपय दिवसान् श्रीराधादामोदरदेवगोस्वामिसमीपेऽवस्थानानन्तर तेन तदनुमतिं गृहीत्वा श्रीगौडीयवैष्णवदर्शनस्य विशेषजिज्ञासया श्रीमद् वृन्दावने तदानीमेकमात्रगौडीय वैष्णवाचार्यस्य श्रीमद् विश्वनाथचक्रवर्तिवचरणस्य सान्निध्यं प्राप्तम् । चक्रवर्तिपादेन बलदेवस्य विनयावनतवैराग्यं स्वाध्यायशीलतां च दृष्ट्वा परमानन्दं लेभे । स तस्मै गौडीय सिद्धान्ताचिन्त्यभेदाभेदवादस्य शिक्षां प्रददौ ततः परं श्रीबलदेव विद्या विभूषणो गौडीय सम्प्रदायस्य सिद्धान्तमेकान्तभावेन कायमनोवाक्यैः स्वीकृत्य तत्प्रचारप्रसारयोः संलग्नो बभूव ।

तस्मिन् समये जयपुरराजपरिषदि गौडीयसम्प्रदायसम्बन्धे रामानन्दिश्रीसम्प्रदायस्य वैष्णवैः कुतर्कमुत्थाप्य राज्ञे विज्ञापितं यत् श्रीगौडीय सम्प्रदायस्य किमपि वेदान्तसूत्रभाष्यं नास्ति । अतस्तेषां मतं सैद्धान्तिकं न विद्यते । श्रीगोविन्द[1] गोपीनाथदेवयोः[2] सेवाभारं श्रीसम्प्रदायस्य हस्ते समर्पयतु भवानिति । तदानीं जयपुराधीशः श्रीगौडीयसम्प्रदायस्य शिष्य आसीत् । तेन तत्क्षणमेव संवादं श्रीवृन्दावनस्थश्रीविश्वनाथचक्रवर्तिचरणसविधे प्रेषयित्वा जिज्ञासितं यत् श्रीगौडीयसम्प्रदायस्य वेदान्तसूत्रभाष्यग्रन्थः कोऽप्यस्ति न वा ? यदि चेदस्ति तर्हि तं यथाशीघ्रं जयपुरे श्रीसम्प्रदायस्य विद्वत्समक्षं प्रमाणाय प्रेष्यताम् ।

---

१—श्रीवृन्दावनकेशितीर्थे (केशिघट्टे), श्रीपादरूपगोस्वामिनासेविता श्रीगोविन्ददेवस्य मूर्तिर्यवनाक्रमणात् सुरक्षार्थं नृपेण जयपुरमानीता ।

२—श्रीवृन्दावने यमुनोपकण्ठे श्रीवंशीवटस्थे श्रीगौराङ्ग पार्षदेन श्रीमधुपण्डितेन सेवितः श्रीगोपीनाथदेवविग्रहः यवनाक्रमणात् सुरक्षार्थं नृपेण जयपुरमानीतः ॥

तदानीं तु श्रीविश्वबाथचक्रवर्तिचरणेनातिवार्द्धक्यवशाद् स्वयं जयपुर गमनमसम्भवं मत्वा स्वशिष्यो यलदेवः प्रेषितः श्रीबलदेवविद्या-भूषणः सर्वदर्शनशास्त्रे पारङ्गत आसीत् । तेन विशालराजसभायां श्रीसम्प्रदायिरामानन्दपन्थिविद्द्भिः सह शास्त्रार्थमारेभे । सिद्धान्त विचारे प्रतिपक्षिणो श्रीबलदेव सम्मुखे नावतस्थुः श्रीबलदेवेनोक्तम्— श्रीगौडीयसम्प्रदायस्य प्रवर्तकेन श्रीकृष्णचैतन्यमहाप्रभुणा श्रीमद् भागवत मेव वेदान्तसूत्रस्याकृत्रिमभाष्यं स्वीकृतम्, षट्सन्दर्भस्तस्यप्रमाणम् ततो राजसभास्थले श्रीसम्प्रदायिविद्वद्भिरियमापत्तिरुत्थापिता यत्— साक्षाद्वेदान्तसूत्रभाष्यातिरिक्तंकिमपि शास्त्रं प्रमाणमस्माभिः श्रोतुं नेष्यते । अगत्या श्रीमद्बलदेवविद्याभूषणेन स्वसम्प्रदाय-भाष्यं दर्शयिष्यामीति प्रतिश्रुत वचनं तेभ्यः प्रदत्तम् ॥

श्रीमद्बलदेववेनातिविषण्णमनसा श्री गोविन्दमन्दिर गत्वा साष्टाङ्गंप्रणिपत्य मनः कामना श्री गोबिन्दाय निवेदिता । निशोथे श्री गोविन्ददेवेनस्वप्नेआदिष्टं यत् त्वं भाष्यं विरचव तन्मदोयसम्मत भाष्यं भविष्यति, कोप्यग्राह्यं कर्तुं न शक्नुयात् । श्री बलदेवेन प्रहृष्टमनसा श्री गोविन्द चरणयुगलं ध्यायं ध्यायं भाष्यं विलिखितम् । भाष्यनामकरणं श्री गोविन्दभाष्यमिति ।

ततो भाष्यग्रन्थमादाय जयपुरराजसभांगत्वा श्रीसम्प्रदायान्तर्भुक्तान् श्रीरामानन्दिविद्वगणान् स्वकीयं भाष्यं दर्शयामास । श्रीगोविन्द भाष्यं पौनः पुन्येन दर्शं दर्शं सर्वेतूष्णीमभवन् । विद्वत्सभायां सर्वैः श्री गौडीयसम्प्रदायस्य विजयो घोषितः । जयपुरनृपगौडीय वैष्णवाः परमाह्लादं लेभिरे । वैष्णवविद्वद्गणैश्च श्रीमद्बलदेवाय "विद्याभूषण" इत्युपाधिनालङ्कृतः ।

इयं सभा श्रीजयपुरस्थ गलता[1] नामक स्थाने १६२८ शततमे शकाब्दे तदनुसारं (१७६३ वि० स०) बभूव । श्रीसम्प्रबायविद्वद्गणाः विद्याभूणसमीपे नैसर्गिक पराभवं मेनिरे ।

श्रीपाद बलदेवविद्याभूषणेन जयपुराद्विजयपत्रं गृहीत्वा श्रीवृन्दावने श्रीविश्वनाथचक्रवर्ति चरणान्तिके समर्प्य पूर्णवृत्तान्तस्तस्मै

१—राजस्थानस्य जयपुरनगरात्प्रायः एकक्रोशपूर्वाभिमुखे "गलता" पर्वतो वर्तते । श्रीनारदस्य शिष्यस्य गालबमुनेराश्रमः पर्वतोपरि विद्यमान-आसीत् तदर्थमेतन्नाम "इति विख्यातम् ॥

निवेदितः। श्रीवृन्दावनवासि वैष्णवगणा अपूर्ववृत्तान्तं श्रावंश्रावं परमानन्दमविन्दन्। श्रीविश्वनाथचक्रवर्तिचरणैर्बलदेवस्य स्वाभीष्टसिद्ध्यर्थम् आनन्दकन्दव्रजनन्दनः प्रार्थितः।

श्रीगोविन्दभाष्यस्यान्तिमे भागे श्रीमद् बलदेव विद्याभूषणेनोल्लिखितम्—

**विद्यारूपं भूषणं मे प्रदाय ख्यातिं निन्ये यो मामुदारः।**

**श्रीगोविन्दस्वप्ननिर्दिष्टभाष्ये राधाबन्धुबन्धुराङ्गः स जीयात्॥**

यो मां प्रत्यत्युदारदयापरवशतया स्वप्नादेशेन भाष्यं मतो व्यलेखयत्। यद् भाष्यं विद्वत्समाजे परमख्यातिं समुपलब्धवत्। विद्वद्गणैर्भाष्यनिमित्तेन मह्यं "विद्याभूषणः" इत्युपाधिः प्रादायि।

अतः परं श्रीमद्विश्वनाथचक्रवर्तिचरणे गौडीयवैष्णवजगति ज्योतिष्कपुञ्जसमानमस्तं गते श्रीमद् बलदेवविद्याभूषणपादैनैव श्रीगौडीय वैष्णव सम्प्रदायस्याचार्यपदं समलङ्कृतम्।

**श्रीमद्बलदेवविद्याभूषणपादस्य शिक्षात्मकः सिद्धान्तः**

**एकमेव परं तत्त्वं वाच्यवाचकभावभाग्।**
**वाच्यः सर्वेश्वरो देवो वाचकः प्रणवो भवेत्।**
**मत्स्यकूर्मादिभीरूपैर्यथावाच्यो बहुर्भवेत्।**
**वाचकोऽपि तथार्थादिभावाब्दहुरुदीर्यते॥**
**आद्यन्त रहितत्वेन स्वयं नित्यं प्रकीर्त्यते।**
**आविर्भावतिरोभावौ स्यातामस्य युगे युगे[१]।**

**ईश्वरः**—ज्ञानक्रियेच्छारूपधर्मत्रयविशिष्टः स एवास्य जगतः स्कर्ता नित्यकारणं च। खण्डोऽथवाणुचैतन्यरूपविभिन्नांशगणानामिच्छायांसत्यामपीश्वरस्याखण्डज्ञानसत्यसङ्कल्पसिद्धिक्रियाशक्तेर्व्यतीता सृष्टिर्नभवति।

---

१—सिद्धान्तदर्पणनसारम्।

वेदानामीश्वरवाक्यत्वात्तेषु भ्रम,[१] प्रमाद,[२] विप्रलिप्सा,[३], करणा-पाटव[४] दोषचतुष्टयशून्यता। सुतरां वेदः स्वतः सिद्धप्रमाणम्।

ज्ञानादि यथेश्वरस्य नित्यधर्मत्वे कीर्तितं, तथैव वेदोऽप्यीश्वरस्य ज्ञानविस्तृतिरुपेग निश्वसितत्वात्कीर्तितोऽस्ति । वेदसदृशपुराणेति-हासादयः कर्तृ वर्जितानादयश्च बोद्धव्याः[5]।

तदेवं सर्वतः श्रेष्ठशब्दस्य स्थितौ तत्त्व निर्णायकस्तु श्रुतिलक्षण एव नत्वार्षलक्षणोऽपि[6] । अर्थात्—प्रत्यक्षानुमानोपमानशब्दर्थापत्त्यनुप-लब्धिसम्भवैतिह्यम् इत्यष्टसु प्रमाणेषु शब्दप्रमाणं सर्वश्रेष्टत्वाच्छ्रुति-लक्षणशब्द एवैकमात्रं तत्त्वं निर्णेतुं क्षमः । आर्षलक्षणशब्दप्रमाणं भवितुं नार्हति। कारणं तु ऋषीणां मध्ये परस्परं विवादो दृश्यते। अतोऽप्राकृत नित्यवेदशास्त्रं श्रुति प्रमाणेषु श्रेष्ठम्। वेदशास्त्रं भ्रमप्रमादादि चतुर्विध दोषशून्यं साक्षादीश्वरतुल्यम्[7]।

प्रमाणेन यन्निर्णयः क्रियते तदेव प्रमेयम्। ईश्वरजीव प्रकृति काल कर्माणीत भेदैः पञ्चविधानि। ईश्वरः—(ब्रह्म) विभुःसर्वंश विज्ञानात्मका नन्दमयगुणवत्पुरुषोत्तमः । स सर्वेषां स्वामी, जन्ममरणादिशून्यः। स ब्रह्मशिबादिदेवानां परमञ्च दैवतम्। पतिगणानां परमपतिः परम-स्तवनीय पुरुचश्च। प्रलये ब्रह्मशिवेन्द्र वरुणप्रभृति देवा विनश्यन्ति। परन्तु ब्रह्म प्रलयकालादावप्येकमात्रमवतिष्ठ।

तद्धरेः परा, क्षेत्रज्ञा माया नाम्नी शक्तित्रयंबिद्यमानमस्ति। पराशक्तिस्वरूपशक्तिः क्षेत्रज्ञाशक्तिर्जीवशक्तिर्मायाशक्तिर्बहिरङ्गा शक्तिरिति नामकं शक्तिरिति[८]। श्री विष्णु पुराणे पराशक्ति विष्णु शक्तिरपराशक्तिस्त-थाऽविद्याकर्म नाम्नी तृतीया शक्तिरित्युल्लिख्यते । तद्धरिर्देहदेहिभेदशून्यः

---

१—भ्रमः भ्रान्तिः।
२—प्रमादः त्रुटिः अनवधानता।
३—विप्रलिप्सा-अपरेषां वञ्चनेच्छा।
४—करणापाटम् —इन्द्रियाऽपटुतादि (दोषचतुष्टयम् ईश्वरवाक्येषु नास्ति)।
५—सिद्धान्तदर्पणानुसारम्।
६—वेदान्तस्यमन्तव्यानुसारम्।
७—तत्रैव १।५१ अनुसारम्।
८—वेदान्तस्यमन्तकानुसारम् २।१८।

स द्विभुजोवनमालाधारी[1], सच्चिदानन्दविग्रहो गोपालो गोविन्दादिनाम्नाऽभिहितः। लक्ष्मीर्भगवतोऽभिन्नस्वरूपा सा जगन्माता लक्ष्मीर्विष्णोरनपायिनी शक्तिरिति। यथा विष्णुः सर्वगामिव्यापकस्वरूपस्तथा लक्ष्मीरपि सर्वगामिनी व्यापकस्वरूपा।

श्री लक्ष्मीर्देवी श्रीहरिसदृशरूपा। इयं लक्ष्मीर्देवी श्रीविष्णोर्देवत्वे देवदेहा तथा मानुषत्वे मानुष्येव भवति[2]। तेषु सर्वेषु राधायाः स्वयं लक्ष्मीत्वं मन्तव्यम्[3]। सर्वेषु भगवद्रूपेषु कृष्णस्य स्वयं भगवत्तत्त्ववत्[3] लक्ष्मीगणेषु श्रीराधिकैव स्वयं लक्ष्मी रित्येव बोद्धया। समस्त भगवद्रूपेषु कृष्ण एव स्वयं भगवान्[4]। बृहद् गौतमीय तन्त्रे चोक्तम्—

देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिसम्मोहिनी परा।

अतो यावतीयोपास्यतत्त्वेषु श्रीकृष्ण एव परमोपास्यतत्त्वम्।

जीवः—ईश्वराणुशक्तिर्नित्योऽविनाशी च। स जीवात्मा नित्य ज्ञानगुणविशिष्टः। स जीवो नित्यमुक्तो बद्धमुक्तो बद्धभेदे च त्रिविधः स च भगवद् दासो मन्तव्यः। "दासभूतो हरेरेव नान्यस्यैव कदाचनेति पद्मवचनात्"[5]। तज्जीवः श्रीसद्गुरुचरणारविन्दाश्रयेण तत्कृपालब्ध-श्रीहरिभक्त्या पुरुषार्थं लभते।

माया—विचित्रसृष्टिकारिणी पारमेश्वरी शक्तिः। सा शक्तिः सत्यमनिर्वाच्या नहि। अनिर्वाच्यत्वस्यार्थः सदसद्विलणो नास्ति। तस्यां सदसद्विलक्षणस्यार्थः कुत्रापि न दृश्यते। मायाशब्दस्य सूक्ष्मार्थेप्यनिर्वाच्यता युक्ता न। यतो माया शब्दो दम्भादिनानार्थस्य च वाचकः। वाच्यवस्तुमात्रमेव मिथ्यासत्त्वे वेदस्याऽप्रामाण्यहेतुर्नास्तिकतापत्तिर्भवेत्[6]।

---

१—आपादसम्बिनीमाला वनमाला प्रकीर्तिता।
२—वेदान्तस्यमन्तकानुसारम्--२।३६।
३—तत्रैव २।३७।
४—एते चांशकला राजन् कृष्णस्तु भगवान् स्वयम (भागवत पुराणम्)।
५--वेदान्तस्यमन्तकानुसारम् ३।११
६—सिद्धान्तरत्नानुसारम् ६।५४। (गौ० द० इ० वै० २७२ पृ० टिप्पणी द्रष्टव्या)

जगत्—सत्यस्वरूपेश्वरस्य शक्तेः कार्यनिबन्धनं सत्यम्। जगतो जन्मादि तस्यानित्यत्वज्ञापकं सत्यत्वम्। नित्यानित्यं साधारणमर्थात् सत्यवस्त्वप्यनित्यं सम्भवेत्। अतो जगत् सत्यंसत्त्वेप्यनित्यम्[1] जगत् ब्रह्माधीनत्वादब्रह्मस्वरूपम्।

अस्य "श्रीमदबलदेवविद्याभूषणस्य" ब्रह्मसूत्रभाष्यं नाम श्रीगोविन्दभाष्यम्। ब्रह्मतु—"श्रीमच्छ्यामसुन्दरः श्रीकृष्ण" एव।

श्रीमद्बलदेवविद्याभूषणपादेन वेदान्तस्यमन्तकग्रन्थान्ते स्वगुरुचरणारविन्दस्येदृशी वन्दना कृता—

राधादिदामोदर नाम बिभ्रता,
विप्रेण वेदान्तमयः स्यमन्तकः।
श्रीराधिकायै विनिवेदितो मया,
तस्याः प्रमोदं स तनोतु सर्वदा ॥२॥

येन श्रीगुरुपादारविन्द युगलाश्रयेणाऽखिलरसामृत मूर्त्तेः श्रीकृष्णचन्द्रस्याऽभिन्नविग्रहस्य श्रीकृष्णचैतन्यचन्द्रस्य भुवनपावनगौदार्यलीलाकथा-श्रवणफलेन च श्रीगौडीयसम्प्रदायाचिन्त्यभेदाभेदसिद्धान्ते परिनिष्ठितस्तस्य (श्रीमद् बलदेवविद्याभूषणस्य) चरणस्मरणपूर्वकं लेखस्यान्तिमभागे महाप्रभोः श्रीगौराङ्गदेवस्य महिमयुक्त श्लोकाभ्यां चोपसंहारः क्रियते।

ब्रह्मानन्द च भित्त्वा विलसति शिखरं यस्य यत्रात्तनीडं।
राधाकृष्णाख्य-लीला मय-खगमिथुनं भिन्नभावेन हीनम्।
यस्यच्छाया भवाध्वश्रमशमनकरी भक्तसङ्कल्पसिद्धे-
र्हेतुश्चैतन्यकल्पद्रुम इह भुवने कश्चन प्रादुरासीत् ॥१॥[2]

हेलोद्धूलितखेदया विशदया प्रोन्मीलदामोदया,
शाम्यच्छास्त्रविवादया रसदया चित्तार्पितोन्मादया।

---

२—श्रीचैतन्यचन्द्रोदयनाटके कविकर्णपुरेणोक्तम्—यस्याग्रभागो ब्रह्मानन्दं विभेद्य (सर्वोपरि) शुशुभे। यस्मिंश्चैकात्मभावे श्रीराधाकृष्णरूप लीलामयविहगयुगलेन कुलायं विरचय्याश्रितः। यस्यच्छाया संसार पथभ्रमणजनितश्रान्तेः शांतिकारिणी भवति। यो भक्तगणानां मनोरथ-परिपूरणार्थहेतुः। सः कोऽप्यपूर्वः श्रीचैतन्यकल्पपादपोऽस्मिन्भूमण्डले समवतीर्णो बभूव।

शश्वद्भक्त विनोदया स-मदया माधुर्यमर्यादया,

श्रीचैतन्य दयानिधे ! तव दया भूयादमन्दोदया ॥१॥

हे दयानिधे ! श्रीचैतन्य ! मां प्रति भवतां दया भवतु । या दया माधुर्य चरमसीमायाअधिकरूपे प्रकाशिता । सा दयात्यन्त वेगवती प्रगतिशालिनी, न हि मन्दा भवति । माधुर्यपराकाष्ठाया विकाश-हेतुः साऽष्टविधै विशेषणैः परिलक्षिता भवति ।

१—या अनायासेन सम्यक् रूपेण यावतीयखेदमथवा दुःखं दूरी करोति २—सा दयाऽतिनिर्मला, ३—तद् द्वारा प्रकृष्टरूपेणामोदः संवर्धितो भवति । ४—तद्द्वारा समस्तशास्त्रविवादः प्रशाम्यति । ५—साऽस्मभ्यमप्राकृत-भक्तिरसं प्रयच्छति । ६—सा चेतसि दिव्योन्मादमुत्पादयति । ७—सा नैरन्तर्यंभक्तेर्विनोदं सम्पादयति । ८—सा (तव) दया परतत्त्वगुणकीर्त्तने मत्तताऽऽवेशं विदधाति च ।



१—श्रीस्वरूपदामोदरगोस्वामिना महाप्रभोः श्रीकृष्णचैतन्यचरणान्ते भूमौ निपत्य तस्य दयायाः स्वरूपमित्थं सुनिर्णीतं-या दया जीवचेतसि समुत्कृष्ट-विस्मया बहुचमत्कारं कर्तुं शक्नोति ।

# शुद्धिपत्रम्

| पृ० सं० | पंक्ति सं० | अशुद्धः | शुद्धः |
|---|---|---|---|
| ९ | २० | मांलभाषा | मांगलभाषा |
| १२ | ६ | व्यस्थेयमेव | व्यवस्थेयमेव |
| १६ | १९ | वायुयन | वायुयान |
| १९ | ४ | प्रादुर्भविष्यति | प्रादुर्भविष्यति |
| १९ | ८ | भविष्यशन्ति | भविष्यन्ति |
| १९ | १७ | भविश्यति | भविष्यति |
| २२ | १३ | ईदृशा | ईदृशः |
| २२ | १४ | मन्त्रद्रष्टरो | मन्त्रद्रष्टारो |
| २३ | ९ | क्रुत्र | कुत्र |
| २३ | १८ | श्रीष्णेव | श्रीकृष्णेव |
| २३ | २१ | सदाचार | सदाचार |
| २७ | १५ | मधुकैरभदन्त्यहन्ता | मधुकैरभदैत्यहन्ता |
| २७ | १९ | भगवर्द्धम | भगवद्धर्म |
| २७ | २६ | नारं | वारं |
| २९ | ४ | सोढुभशक्या | सोढ़ुमशक्या |
| ० | ६ | दु:सखेष्वपि | दु:खेष्वपि |
| ५ | २२ | कृतावन्त: | कृतबन्त: |
| ६ | २३ | तज्जा समुद्रे | लज्जा समुद्रे |
| ७ | ४ | नामत्रि | नामभि: |
| ८ | २४ | वविधाम् | विविध्यम् |
| ९ | ५ | भगवद्वर्चनं | भगवदर्चनं |
| ० | ४ | दोषों | दोषं |
| २ | ३४ | दावेन्द्रो | दानवेन्द्रो |
| ३ | ६ | मोकुलावन्द | गोकुलानन्द |
| ३ | ११ | मार्गषंवोऽपि | मार्गशीर्षतोऽपि |
| ३ | १६ | प्रर्थयामासु | प्रार्थयामासु |
| ७ | ५ | त्रसनानि | बसनानि |
| ७ | १२ | परम | परमं |
| ८ | ४ | सङ्कुचित | सङ्कुचित |
| १ | २२ | शंक्रादिदेवै: | शक्रादिदेवै: |
| १ | २३ | वशंनेच्छया | दर्शनेच्छया |
| २ | ४ | शान्ताय | शान्ताय |

| पृ० सं० | पंक्ति सं० | अशुद्धः | शुद्धः |
|---|---|---|---|
| ५२ | ५ | स्तुक्तिभिः | सूक्तिभिः |
| ५३ | १७ | ब्रःह्मण | ब्राह्मण |
| ५४ | २० | कुयुः | कुर्युः |
| ५५ | ७ | उज्जायिनी | उज्जयिनी |
| ५६ | २८ | गङ्गास्नयि | गङ्गास्नायि |
| ६१ | १२ | देवयामवगन्तुं | देवमायामवगन्तुं |
| ६४ | २१ | महाभागा: | महाभागाः |
| ७० | ६ | सूय | सूर्य |
| ७० | ८ | मन्ध्याराशी | सन्ध्याराज्ञी |
| ७० | १३ | ऽव्ययना | ऽध्ययना |
| ७२ | २२ | सोमसमर्था | सोढमसमर्था |
| ७३ | ७ | सभ्यतयाः | सभ्यतायाः |
| ७३ | २७ | शिक्षार्थविव | शिक्षार्थामिवा |
| ७३ | २७ | मानवदेह | मानवदेहं |
| ७५ | १४ | राजसभायः | राजसभायां |
| ७६ | ८ | सत्पुरुषाणा | सत्पुरुषाणां |
| ७६ | १८ | तप्नाङ्कर | तप्ताङ्गार |
| ७६ | १५ | भागवोतोत्तमो | भागवतोत्तमो |
| ८० | १८ | मख्य फलम् | मुख्यफलम् |
| ८२ | २३ | भवेत | भवेत् |
| ९० | ३ | कीटादरभ्य | कीटादारभ्य |
| ९० | ८ | शरीरापयाण्यनित्यानि | शरीराण्यप्यनित्यानि |
| ९० | २३ | ववंते | वर्तते |
| ९० | २३ | विपये | विषये |
| ९१ | ७ | स्वीकरणमति | स्वीकरणमिति |
| ९१ | १६ | द्वाविध | द्विविध |
| ९१ | २५ | मङ्कारः | महङ्कारः |
| ९२ | १३ | पूर्त्तरभाबेः | पूर्त्तरभावे |
| ९२ | १४ | प्रकरेण | प्रकारेण |
| ९३ | २३ | अनुभर्वात | अनुभवति |
| ९८ | १ | आर्यत्रर्य | आचार्यवर्य |
| ९९ | ८ | दद्वैताचाय्यादि | अद्वैताचार्य्यादि |

| पृ० सं० | पंक्ति सं० | अशुद्धः | शुद्धः |
|---|---|---|---|
| ९९ | १० | सन्ति तिकथने | सन्तीति कथने |
| ९९ | १८ | ततस्त | ततस्तं |
| ९९ | २९ | श्रीमन्नित्यनन्द | श्रीमन्नित्यानन्द |
| १०० | ३२ | मद्घाटय | मुद्घाट्य |
| १०१ | १७ | श्रीकूर्मक्षत्रे | श्रीकूर्मक्षेत्रे |
| १०१ | २३ | तरप्रभावेण | तत्प्रभावेण |
| १०१ | २५ | श्रीत्परमानन्द | श्रीपरमानन्द |
| १०२ | ८ | तन्तुखात् | तन्मुखात् |
| १०२ | १४ | रामः नन्दाय | रामानन्द्राय |
| १०३ | २ | प्रदुर्भावः | प्रादुर्भावः |
| १०५ | १३ | सद्गरोः | सद्गुरोः |
| १०५ | १४ | मुत्तयाद्य | मुक्त्याद्य |
| १०६ | १९ | गोस्वाममि | गोस्वामि |
| ११२ | २६ | काविता | कविता। |
| ११२ | ११ | प्रन्बधा | प्रबन्धा |
| ११८ | २४ | त्वरित | त्वरिता |
| ११८ | २४ | प्रियाफलोतीहि | प्रियालोकफलो हि |
| १२१ | २८ | कमिनो | कामिनी |
| १२१ | ३० | बाल्प | बाल्य |
| १२५ | ६ | अपर्व | अपूर्व |
| १२८ | १० | साते। | सीते!' |
| १२९ | २ | मतिमतरैः | मतिमत्तरैः |
| १२९ | ६ | सर्वोकर्षकः | सर्वाकर्षकः |
| १२९ | १० | मार्गावत लम्बिनां | मार्गावलम्बिनां |
| १२९ | २५ | भारताथ | भारतार्थ |
| १३० | ८ | विश्वमिद | विश्वमिदं |
| १३० | १७ | नति | नेति |
| १३० | १८ | विवर्तवाद | विवर्तवादं |
| १३१ | ६ | शक्तिवदिते | शक्तिवदिति |
| १३१ | २२ | पिच | अपि च |
| १३१ | २२ | स्थूल शरीर | स्थूल शरीरं |
| १३१ | २६ | विशे | विशेषण |

| पृ० सं० | पंक्ति सं० | अशुद्धः | शुद्धः |
|---|---|---|---|
| १३१ | २६ | निमित्तापादान | निमितोपादान |
| १३१ | २७ | सृष्टिका | सृष्टिकारिणी |
| १३२ | ४ | सशलिक | सशक्तिकं |
| १३२ | १० | वंशीयस्य | वंशीय |
| १३२ | १० | पवित्रगर्भा | पवित्रगर्भे |
| १३२ | १७ | कवलं | केवलं |
| १३२ | १९ | विरचय्प | विरचय्य |
| १३२ | २५ | शुद्धाद्वैत | शुद्धद्वैत |
| १३२ | २५ | केवलाद्वैतवादः | केवलद्वैतवादः |
| १३३ | १२ | सत्यावन्तो | सत्यवन्तो |
| १३३ | २९ | गोष्ठिा | गोष्ठिं |
| १३४ | २७ | ·युक्तिदमूहा | युक्ति समूहः |
| १३५ | १५ | विद्यते | विद्यते |
| १३६ | २६ | पर्वतगत्वा | पर्वतं गत्वा |
| १३६ | २७ | यदुह्मबिद्यां | यद्ब्रह्मविद्यां |
| १३७ | ७ | सिद्धान्तोद्धतावसरे | सिद्धान्तोद्धृतावसरे |
| १३७ | ८ | पञ्चक्लेशोनां | पञ्चक्लेशानां |
| १३८ | १ | भावृतः | आवृतः |
| १३९ | २ | श्रीसर्वक्ष | श्रीसर्वज्ञ |
| १३९ | ९ | स्थिति माल | स्थितिकालं |
| १४१ | १९ | वैशिष्टय च | वैशिष्ठ्यं च |
| १४१ | २१ | परोक्षित् | परीक्षित् |
| १४१ | २३ | कुसुमाञ्चलयाः | कुसुमाञ्जलयाः |
| १४२ | ५ | अणादयश्च | अरुणादयश्च |
| १४२ | १६ | प्रसारणना | प्रसारणेना |
| १४२ | २४ | कालस्यावार्यः | कालस्याचार्यः |
| १४२ | २५ | ब्रह्मसत्रस | ब्रह्मसूत्रस्य |
| १४२ | २५ | आक्षिय | आक्षिप्य |
| १४३ | २२ | रुमयो | रुभयो |
| १४३ | २२ | कालयं मंध्यो | कालयोर्मध्ये |
| १४३ | २३ | तथाप्युमौ | तथाप्युभौ |

